महर्षेर्वचनं श्रुत्वा गरुडेन महौजसा। कच्छपः प्रापितः सद्यः स्थलं पक्षधरेण तु ॥१३॥
स्थलस्थं कच्छपं दृष्ट्वा तरुणादित्यवर्चसम्। शिरश्चिच्छेद कूर्मस्य शीघ्रं चक्रेण कैशविः ॥१४॥
विराधं निहतं दृष्ट्वा विस्मयोत्फुल्ललोचनाः। ववर्षुः कुसुमं देवाः प्रद्युम्नोपरि हर्षिताः ॥१५॥
बभूव सन्ध्यासमये कुङ्कुमारुणसुन्दरः। तपसा पूरिते व्योम्नि ज्योत्स्निानिकरसंवृतः ॥१६॥
तदुत्सवादिवोद्भूतो रराज रजनीकरः। तस्यां रात्रौ चक्रपाणिर्वासं तत्र चकार हि ॥१७॥
नारदोऽपि महाहृष्टो मृगेन्द्रशिखरं ययौ। सूर्यकेतोर्नृपस्याग्रे सर्वामाचष्ट तां कथाम् ॥१८॥
हर्षनिर्भरसंयुक्तः सूर्यकेतुर्नराधिपः। तस्यां रजन्यां सगणो विष्णुमभ्युद्भवस्थलीम् ॥१९॥
अधित्यकां ययौ शीघ्रं नारदेन समन्वितः ॥२०॥
अद्य नायास्यति विभुर्नृपते मधुसूदनः। त्वया मयाऽत्र स्थातव्यं विष्णुदर्शनवाञ्छया ॥२१॥
नारदस्य वचः श्रुत्वा प्राह भूपतिसत्तमः। श्रीकृष्णदर्शनोत्कण्ठा जायते महती मम ॥२२॥
नारायणस्य प्रतिमा कर्तव्याऽत्र मया मुने। नान्यथा चित्तशान्तिर्मे भविष्यति तपोधन ॥२३॥
नृपतेर्वचनं श्रुत्वा नारदः प्राह भूपतिम्। धन्योऽसि विष्णुभक्तोऽसि स्थापय प्रतिमां प्रभोः ॥२४॥
प्रातर्द्रक्ष्यसि गोविन्दं प्रद्युम्नसहितं नृप। इति नारदवाक्यान्ते प्रतिमां मधुविद्विषः ॥२५॥
जलस्थां स्थापयामासानन्तस्थां नरपालकः। अनन्तभोगशयनं विष्णुं द्रक्ष्यन्ति ये नराः ॥२६॥
तेषां नारायणस्तुष्टः स्वस्थानं दास्यति ध्रुवम्। विष्णुं संस्थाप्य नृपतिर्महाविभवविस्तरैः ॥२७॥
महोत्सवेन रजनीं निनाय नरपालकः। ततः प्रभाते विमले सूर्यकेतुर्नराधिपः ॥२८॥
जगाम मुनिसंयुक्तो यत्रास्ते मधुसूदनः। स विलोक्य जगन्नाथं सूर्यकेतुर्नराधिपः ॥२९॥

सूर्यकेतुरुवाच

प्रणम्य दण्डवद्भूमौ रोमाञ्चाङ्कितविग्रहः। नमस्ते देवकीपुत्र नमस्ते मधुसूदन ॥३०॥
नमोऽस्तु ते हृषीकेश कैटभारे नमोऽस्तु ते। नमस्ते भगवन् विष्णो जिष्णो कंसनिषूदन ॥३१॥
त्राहि मां शेषशयन जगदीश नमोऽस्तु ते। मुरारेऽस्तु नमस्तुभ्यं वामनाय नमोऽस्तु ते ॥३२॥
रामचन्द्र नमोऽस्तु श्रीकृष्णाय नमोऽस्तु ते। नमस्ते कमलाकान्त नमस्ते धरणीधर ॥३३॥
नमः पङ्कजनेत्राय पद्मनाभाय ते नमः। नमो वराहरूपाय कूर्मरूपाय ते नमः ॥३४॥
नमस्ते जगदाधार नृसिंहाय नमोऽस्तु ते। इति स्तुत्वा सूर्यकेतुः श्रीकृष्णचरणद्वयम् ॥३५॥
शिरस्याधारयत् तस्थौ प्राञ्जलिर्भक्तिसंयुतः। ज्ञात्वा भक्तं सूर्यकेतुं प्रोवाच मधुसूदनः ॥३६॥

श्रीकृष्ण उवाच

सूर्यकेतो नृपोत्तिष्ठ भक्तोऽसि मम सर्वथा। वरं ब्रूहि महाभाग यत् ते मनसि वर्तते ॥३७॥
इति कृष्णवचः श्रुत्वा सूर्यकेतुर्जगाद ह।

सूर्यकेतुरुवाच

यदि तुष्टोऽसि गोविन्द मृगेन्द्रशिखरे त्वया ॥३८॥
मया साकं प्रगन्तव्यं मत्कार्यं समुपस्थितम्। प्रद्युम्नाय मया देया कन्या चन्द्रावती शुभा ॥३९॥

मार्कण्डेय उवाच

सम्पादयित्वा तत् कार्यं द्वारका गम्यतां प्रभो। तथेत्युक्त्वा मुनिवरः प्रतस्थे गरुडध्वजः ॥४०॥
गत्वा पशुपतिस्थानं स्नात्वा वै वाग्वतीजले। सन्ध्यामुपास्य विधिवत् सन्तर्प्य च पितामहान् ॥४१॥
विलोक्य वत्सलां देवीं ययौ पशुपतिं प्रभुः। दृष्ट्वा पशुपतिं देवं पूजयित्वा यथाविधि ॥४२॥
प्रदक्षिणं विधायापि दक्षिणद्वारमाययौ। तत्रोपविष्टो भगवान् जपं चक्रे समाहितः ॥४३॥
आगतं माधवं श्रुत्वा स्थाने पशुपतेः शुभे। आगता ब्राह्मणाः सर्वे दोलागिरिनिवासिनः ॥४४॥
तपः स्वाध्यायनिरता वेदवेदाङ्गपारगाः। ऋष्याश्रमस्था मुनयः सर्व एव समागताः ॥४५॥
आगता मुनयः सर्वे वागीश्वरनिवासिनः। ये च श्लेष्मान्तकवने संस्थिता मुनयः सदा ॥४६॥
ते सर्वेऽथ समायाताः कृष्णदर्शनकाङ्क्षया। तानागतान् मुनीन् दृष्ट्वा वेदवेदाङ्गपारगान् ॥४७॥

ब्रह्मण्यदेवो भगवान् ननाम च मुहुर्मुहुः। तेभ्यो दानान्यनेकानि ददौ च परमेश्वरः ॥४८॥
मुनिमध्ये महातेजा नेमिरुग्रतपोनिधिः। दक्षिणं बाहुमुत्थाप्य शास्त्रसारं वचो जगौ ॥४९॥
अहो भाग्यमहो भाग्यं तपस्या सफला हि नः। एकत्र हि यतो दृष्टौ देवौ हरिहरौ प्रभू ॥५०॥
वयं कृतार्था धन्याश्च यद्दृष्टौ मांसचक्षुषा। देवौ हरिहरौ साक्षात् पुराणपुरुषावुभौ ॥५१॥
यो हरिं हररूपेण हरं च हरिरूपिणम्। यः पश्यति स एव स्याद्वैष्णवः शैव एव च ॥५२॥
हरौ हरे च ये भेदं कुर्वन्ति मनुजाधमाः। पाखण्डिनो वेदबाह्यास्ते वै निरयगामिनः ॥५३॥
गङ्गागौर्योरभेदं तु तथा शङ्करकृष्णयोः। ये पश्यन्ति नरा धन्यास्ते कृतार्था न संशयः ॥५४॥
इति नेमिवचः श्रुत्वा देवः पशुपतिर्हरिः। बभूवातीव मुदितो मुनीनामग्रतः स्थितः ॥५५॥
जैमिने मुनिशार्दूल श्रूयतां वचनं मम। ततः प्रोवाच सन्तुष्टो देवः पशुपतिर्मुनिम् ॥५६॥

श्रीपशुपतिरुवाच –

नेमे मुनिगणश्रेष्ठ तुष्टोऽहं ते वदाम्यहम्। अस्मिन् श्लेष्मान्तकवने मृगरूपेण वै मया ॥५७॥
यत्र भ्रान्तं जलं पीतं यत्र सुप्तं स्थितं मया। तत्र तत्रैव तीर्थं मे जातं ब्राह्मणसत्तम ॥५८॥
अस्मिन् श्लेष्मान्तकवने तपो वासुकिना पुरा। तप्तं वासुकिनाम्ना वै क्षेत्रमेतद् भविष्यति ॥५९॥
नेमे त्वमस्य क्षेत्रस्य मुनीनामग्रणीर्भव। पालनीयं त्वया क्षेत्रं वचनान्मे तपोधन ॥६०॥

मार्कण्डेय उवाच –

ततः प्रभृति तज्जातं क्षेत्रं नेपालसंज्ञकम्। नेमिना मुनिना यस्मात् पालितं पुण्यकर्मणा ॥६१॥
क्षेत्रं हिमवतः कुक्षावतो नेपालसंज्ञकम्। ततो नारदप्रद्युम्नसहितो मधुसूदनः ॥६२॥
युक्तः समस्तैर्मुनिभिः सूर्यकेतुनृपेण च। आज्ञां पशुपतेर्लब्ध्वा द्रष्टुं गुह्येश्वरीं ययौ ॥६३॥
दृष्ट्वा गुह्येश्वरीं देवीं गोकर्णेशं विलोक्य च। महोत्साहेन सहितो मृगेन्द्रशिखरं ययौ ॥६४॥
वाग्वतीप्रभवे स्नात्वा दत्त्वा दानान्यनेकशः। महेन्द्रस्यालयमिव सूर्यकेतोर्गृहं ययौ ॥६५॥
सूर्यकेतुर्ददौ कन्यां विधिना नारदान्वितः। प्रद्युम्नाय महाभागस्तदा चन्द्रावतीं शुभाम् ॥६६॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह। माल्याम्बरैर्विचित्रैश्च चित्रैराभरणैस्तथा ॥६७॥
पूजयामास देवेन्द्रं सपुत्रं मधुसूदनम्। ननर्ताप्सरसां वृन्दो नूपुरध्वनिभिस्तदा ॥६८॥
गन्धर्वाः प्रजगुर्गीतं किन्नराश्च जगुर्मुदा। प्रववावनिलश्चापि पुण्यगन्धवहः शुचिः ॥६९॥
वधूं चन्द्रावतीं दृष्ट्वा चन्द्रलेखामिवापराम्। तुतोष भगवान् विष्णुर्विस्मयोत्फुल्लमानसः ॥७०॥
देवी चन्द्रावती चापि विशेषकृतभूषणा। राजलक्ष्मीरिवाबभौ प्रद्युम्नं समुपस्थिता ॥७१॥
जामातरं समासाद्य प्रद्युम्नं बलिनां वरम्। तुतोषातिशयं श्रीमान् सूर्यकेतुर्नराधिपः ॥७२॥
हरिचन्दनलिप्ताङ्ग इन्द्रनीलसमप्रभः। शङ्खचक्रगदापाणिर्देवगन्धर्वपूजितः ॥७३॥
मुनिभिर्वेदशब्देन सन्तुष्टो लोमहर्षणः। आरुरोह गरुत्मन्तं भगवान् मधुसूदनः ॥७४॥
देवीं चन्द्रावतीं चापि राजपुत्रीं प्रभावतीम्। रथमारोपयामास प्रद्युम्नः केशवाज्ञया ॥७५॥
स्त्रीरत्नैः सर्वरत्नौघैः पूरितं रथमुत्तमम्। आरुरोह स प्रद्युम्नः कामगं हेमनिर्मितम् ॥७६॥
सकुटुम्बः सूर्यकेतुः कामगं केशवाज्ञया। आरुरोह रथं दिव्यं पुष्पकं धनदो यथा ॥७७॥
उत्पपात तदाकाशमिन्द्रनीलसमप्रभम्। मुनिना सहितो मारसंयुतो हर्षसंयुतः ॥७८॥
विलोक्य क्षेत्रमतुलं वाग्वतीं सरितां शुभाम्। प्रहृष्टो भगवान् विष्णुरिदं वचनमब्रवीत् ॥७९॥
पश्य दक्षिणभागेन मृगशृङ्गस्य भूभृतः। चन्द्रदीप्तितटं पुण्यं स मे स्थानं भविष्यति ॥८०॥
सिंहवक्त्रवपुर्भूत्वा स्थितोऽहं यत्र सर्वदा। पूजयिष्यन्ति लोकाश्च मम भक्तिपरायणाः ॥८१॥
इन्द्रेश्वरं प्रतिष्ठाय शक्रनद्याः शुभे तटे। चकार भगवानिन्द्रो यत्र यज्ञं मनोहम् ॥८२॥
वासो मे सर्वदा रम्ये दोलाशिखरमूर्धनि। शिखरं श्रेष्ठमित्येव कीर्तयिष्यन्ति भूतले ॥८३॥
पूजयिष्यन्ति लोकाश्च सुव्यक्तं मकरध्वज। ब्राह्मणा बहवोऽप्यत्र सन्ति स्वाध्यायशालिनः ॥८४॥
सान्निध्यं सर्वदा तत्र सन्ध्याकाले विशेषतः। पश्य कर्कोटकह्रदं सर्वौषधितले शुभे ॥८५॥

रमन्ते यत्र नागेन्द्राः कर्कोटकपुरस्सराः। वाग्वत्या मणिमत्याश्च गर्भे यावत् कृतं पदम् ॥८६॥
तावत् वर्षशतं स्वर्गे मोदते शिवभक्तिमान्। वाग्वत्या मणिमत्याश्च सम्भेदे लोकपूजिते ॥८७॥
गच्छामीत्युक्तमात्रेण भूयात् पापप्रणाशनम्। सम्भेदे मणिमत्याश्च सम्भेदे लोकपूजिते ॥८८॥
स्नायते सततं येन पुण्यवान् कीर्त्यते स तु। तत् समीपे समुद्भूता रुद्रधारेति योच्यते ॥८९॥
कल्पिता देवदेवेन लोकानुग्रहकारणात्। भुक्तिमुक्तिप्रदं पुण्यं शिवमायोपलक्षितम् ॥९०॥
रुदधारोदयं दृष्ट्वा सर्वपापैः प्रमुच्यते। गयाया नैमिषाद्वाऽपि कुरुक्षेत्राच्च पुष्करात् ॥९१॥
स्नानं दशगुणं ज्ञेयं मणिमत्याश्च सङ्गमे। वीरभद्रासङ्गमं च पश्य नारद सुन्दरम् ॥९२॥
लिङ्गं संस्थापितं यत्र स्वयं हनुमता पुरा। वीरावतरणे तीर्थे भद्रनद्याश्च सङ्गमे ॥९३॥
स्नायते विधिना यस्तु वीरलोकं स गच्छति। रामायणकथाऽप्यत्र कृता वाल्मीकिना पुरा ॥९४॥
चम्पानदीसङ्गमजं तीर्थं पापप्रणाशनम्। तिलमाधवतीर्थं तु मुनिभिः कथितं यतः ॥९५॥
इमां मनोहरां पश्य मनोहरजलां नदीम्। हंसकारण्डवाकीर्णां चक्रवाकोपशोभिताम् ॥९६॥
मनोहराया वाग्वत्या मध्ये वा वर्तते मही। धर्मभूमिरियं ख्याता सदा धर्मविवर्धिनी ॥९७॥
इमां पुण्यजलां पश्य महापातकनाशिनीम्। वाग्वतीं सरितां श्रेष्ठां महादेवमुखोद्भवाम् ॥९८॥
वाग्वती सरितां श्रेष्ठा यत्र कुत्रावगाह्यते। तत्र तत्र फलं विद्याद्वाजपेयाश्वमेधयोः ॥९९॥
मनोहराया वाग्वत्याः सङ्गमं पश्य सुन्दरम्। यत्र स्नानेन मनुजो ब्रह्मलोकं स गच्छति ॥१००॥
नदीं विष्णुपदीं पश्य फेनोर्मिधवलां शुभाम्। यत्र स्नानेन मनुजो विष्णुलोकं प्रपश्यति ॥१०१॥
वाग्वत्या विष्णुमत्याश्च मध्ये या वर्तते मही। सिद्धिभूमिस्तु सा प्रोक्ता तत्र पापं न विद्यते ॥१०२॥
पुलहाश्रममूले तु रुद्रमत्याश्च सङ्गमे। अर्यमा तुष्यते तत्र सूर्यलोकं स गच्छति ॥१०३॥
विष्णुनद्यास्तटे तीर्थे पश्य टङ्केश्वरं विभुम्। वाग्वत्या विष्णुमत्याश्च सम्भेदमतिपुण्यदम् ॥१०४॥
यत्र लिङ्गानि पञ्चापि वर्तन्ते मकरध्वज। पञ्चलिङ्गाह्वयं तीर्थं नाम तस्य प्रतिष्ठितम् ॥१०५॥
पञ्चलिङ्गाह्वये तीर्थे सङ्गमे स्नानमाचरेत्। न तस्य वर्तते देहे पापं पुत्र कदाचन ॥१०६॥
वाग्वत्या विष्णुमत्याश्च सङ्गमे सुमनोहरे। पुराऽत्र हरिणा छिन्नो जानुः सत्या हरार्थतः ॥१०७॥
अस्मिन् पीठे ये जपन्ति कृतार्थास्ते न संशयः। सर्वौषधिगिरेश्चैव दक्षिणे गिरिगह्वरे ॥१०८॥
तत्रापि च ममावासो भविता मकरध्वज। क्षेत्रपालप्रभावेण गोपितं लोकदुर्गमम् ॥१०९॥
सुगमं चापि तत्रैकं भविष्यति झषध्वज। पश्य त्वद्धस्तनिहतं विराधं कच्छपासुरम् ॥११०॥
कूर्मपर्वतमित्येवं कीर्तयिष्यन्ति मानवाः। परितस्तस्य शैलस्य प्रभावादासुरात् तथा ॥१११॥
सस्यवृद्धिर्विशेषेण भविष्यति न संशयः। अस्मिन् कूर्मगिरौ पुण्ये पुण्यकृद्भिर्निषेविते ॥११२॥
यत्र यत्र स्थितं तोयं तीर्थं तत्र भविष्यति। कच्छपाचलमूले हि वाग्वत्या जलसङ्गमे ॥११३॥
पश्चिमं तटमासाद्य स्नात्वा कामफलं लभेत्। अस्य कूर्मगिरेर्मूले वाग्वत्याः पश्चिमेन तु ॥११४॥
भविष्यति जलादन्तर्गणेशो लोकपूजितः। तत्रापि च मम स्थानं दुर्विज्ञेयं भविष्यति ॥११५॥
स्नानादपि च वाग्वत्यां जायते पुण्यवान् नरः। भिन्नसेतुतटे रम्ये पर्वते चन्दनागिरौ ॥११६॥
विष्णुतीर्थमिति ख्यातं स्थानं मम भविष्यति। मीनचक्रह्रदे पुण्ये पुरतो मम सम्भवः ॥११७॥
द्वादश्यां स्नानमात्रेण मम लोके महीयते। पतिव्रतासु नारीषु ब्राह्मणे वेदपारगे ॥११८॥
मम क्षेत्रे च यद्दत्तं तदक्षयमिति स्मृतम्। चन्दनागिरिमूले तु पश्य तीर्थं प्रकामदम् ॥११९॥
अत्र पुत्र महादेव्या स्वयं घृष्टं च चन्दनम्। सुप्रभाभवनं भग्नं नानारत्नप्रभायुतम् ॥१२०॥
हतावशेषास्त्वसुरा गतवन्तो रसातलम्। इत्युक्त्वा भगवान् विष्णुः सगणो देवपूजितः।
गरुडादवतीर्णोऽभूत् क्षेत्रे परमदुर्लभे ॥१२१॥

इति श्रीस्कन्दपुराणे हिमवत्खण्डे नेपालमाहात्म्ये एकादशोऽध्यायः ॥११॥

---

**जैमिनिले भन्नुभयो – हे मुनिश्रेष्ठ मार्कण्डेय ! कीलेश्वर नामको लिङ्ग र स्वर्णशृङ्गेश्वर लिङ्गको स्थापना गरेर जनार्दनले के गर्नुभयो त्यो र कच्छपासुरले जे गऱ्यो त्यो पनि भन्नुहोस्। महेन्द्रमनको कथा पनि ज्यादै राम्रो रहेछ। हे महाभाग तपाईंबाट सुनेर म तृप्त नै हुन्न ॥१-२॥**

मार्कण्डेयले भन्नुभयो – महाभाग मुनिसत्तम हे जैमिनि ! ठीक सुन्नुहोस्, जनार्दनले जे गुर्नभयो त्यो भन्छु । समर्थ विष्णुले दुईवटा लिङ्गको स्थापना गरेपछि दुबै पर्वतको फेदी पातालै गयो । कच्छपासुरले ती डाँडालाई फाल्न सकेन । अनि बलिया प्रद्युम्नसँग बाहुयुद्धद्वारा लड्यो । नारदले पनि चाँडै नै प्रद्युम्नलाई यो भने – दानवाधम दुरात्मा विराधलाई उत्तानो पारेर यसको कोखामा रहेको रत्न चाँडै नै लेऊ ॥३–७॥

महर्षिको बोली सुनेर त्यसलाई बलैले उत्तानो पारी छिट्टै छरितो भएका पराक्रमी प्रद्युम्नले सबै रत्नहरू खड्गद्वारा लिए । फेरि चाँडै नै फरक्क फर्केर रिसाएको कच्छपासुरले बारम्बार गर्जंदै प्रद्युम्नलाई तर्सायो । रीसाहा कच्छपासुरलाई नमरेको देखेर श्रेष्ठ मुनि नारदले फेरि हरिका छोरालाई भने – यहाँ शूलधारीको प्रसादबाट र वाग्वतीको पानीको संसर्गबाट ती दानववीरहरूको वध हुँदैन । हे प्रद्युम्न ! त्यसै कारणले मेहनतसाथ गरुडको पखेटाद्वारा हुत्याऊ, पछि चक्रले यसको शिर काट्नुपर्छ ॥८–१२॥

महर्षिको वचन सुनेर ठूलो तेज भएका पखेटादार गरुडले उत्तिखेरै कछुवालाई पाखामा पुऱ्याए । मध्याह्नकालका सूर्यको जस्तो तेज भएको कछुवालाई पाखामा देखेर केशवका छोराले चक्रद्वारा कछुवाको टाउको काटे । विराधलाई मारेको देखेर आश्चर्यले मन प्रफुल्लित भएका हर्षित देवताहरूले प्रद्युम्नमाथि फूल बर्साए । अन्धकारै अन्धकार भएको आकाशमा जूनको समूहले ढाकिएका तिनी सन्ध्यासमयमा कुंकुमको रातोपनले सुन्दर भए । त्यसै उत्सवबाट निस्के जस्ता चन्द्रमा शोभित भए । त्यस रात विष्णु त्यहीँ वास बसे ॥१३–१७॥

औधी खुसी भएका नारद पनि मृगेन्द्रशिखरमा गए र सूर्यकेतु राजाको अगाडि त्यो कथा बेलीविस्तारपूर्वक भने । आफ्ना दलवलले सहित नारदलाई साथ लिएर सारै खुसी भई सूर्यकेतु अधित्यकामा तुरुन्तै गए । खुसी भएका राजालाई मुनिसत्तम नारदले भने – हे राजा ! व्यापक भएका मधुसूदन आज आउनुहुनेछैन विष्णुलाई दर्शन गर्ने इच्छाले तपाईं र म यहीं बस्नुपर्छ ॥१८–२१॥

नारदको कुरा सुनेर राजाले भने – श्रीकृष्णको दर्शन गर्ने मेरो ठूलो उत्कण्ठा छ । म नारायणको प्रतिमा यहाँ बनाउँछु । हे तपोधन ! अन्यथा मेरो चित्त शान्त हुँदैन । राजाले यति भनेपछि उनलाई नारदले भने – तपाईं धन्य हुनुहुन्छ, विष्णुभक्त हुनुहुन्छ । प्रभुको प्रतिमा स्थापित गर्नुहोस्, हे राजा ! प्रद्युम्नसहितका गोविन्दलाई बिहान देख्नुहुनेछ । यति नारदको कुरा सकिनासाथ राजाले जलको बीचमा अनन्त माथि मधुदैत्यका शत्रुको प्रतिमा स्थापित गरे । अनन्तभोगशयन विष्णुलाई जो मानिसहरूले दर्शन गर्नेछन्, खुसी भएका नारायणले तिनीहरूलाई आफ्नो स्थान निश्चय दिनुहुनेछ । राजाले विष्णुको स्थापना गरेर मन फुकाएर खर्च गरी ठूलो उत्सवसाथ रात बिताए । त्यसपछि स्वच्छ प्रभातमा मुनिले युक्त भएका सूर्यकेतु राजा मधुसूदन जहाँ बस्नुभएको थियो, त्यहाँ गए ॥२२–२९॥

ती सूर्यकेतु राजाले जगन्नाथलाई देखेर शरीरमा रोमाञ्च भएका हुँदा भुइँमा दण्डवत् प्रणाम गर्दै । सूर्यकेतुले भने – हे देवकीपुत्र ! तपाईंलाई नमस्कार छ,हे मधुसुदन ! तपाईंलाई नमस्कार छ, हे हृषीकेश ! तपाईंलाई नमस्कार छ, हे कैटभारि ! तपाईंलाई नमस्कार छ । हे भगवान् विष्णु ! जिष्णु ! र कंसलाई मार्ने तपाईंलाई नमस्कार छ । हे शेषमा सुत्ने भगवान् ! मेरो रक्षा गर्नुहोस् । तपाई जगदीशलाई नमस्कार छ । हे मुरारि ! तपाईंलाई नमस्कार छ । हे वामन ! तपाईंलाई नमस्कार छ, हे रामचन्द्र ! तपाईंलाई नमस्कार छ, तपाईं श्रीकृष्णलाई नमस्कार छ । हे कमलाकान्त ! तपाईंलाई नमस्कार छ, हे धरणीधर ! तपाईंलाई नमस्कार छ, कमल जस्तो आँखा भएका तपाईंलाई नमस्कार छ, हे पद्मनाभ ! तपाईंलाई नमस्कार छ । वराहरूप तपाईंलाई नमस्कार छ, कूर्मरूप तपाईंलाई नमस्कार छ, जगत्का आधार तपाईंलाई नमस्कार छ, हे नृसिंह ! तपाईंलाई नमस्कार । यस्तो स्तुति गरेर सूर्यकेतुले श्रीकृष्णको दुबै पाउमा शिर राखे र भक्तिले युक्त भएर हात जोडी बसे । सूर्यकेतुलाई भक्त भन्ने जानेर भगवान् मधुसूदन भन्न लाग्नुभयो ॥२९–३६॥

श्रीकृष्णले भन्नुभयो – राजा सूर्यकेतु उठ्नुहोस्, निश्चय मेरो भक्त हुनुहुन्छ, महाभाग तपाईंको मनमा जे छ ज्यो वर माग्नुहोस् । कृष्णको यस्तो बोली सुनेर सूर्यकेतुले बिन्ती गरे । सूर्यकेतुले भने – हे गोविन्द ! यदि खुसी हुनुहुन्छ भने मसँग तपाईं मृगेन्द्रशिखर जानुपर्छ । त्यहाँ गएर मेरो आइलागेको कर्तव्यलाई पूर्ण तुल्याउनु छ । म मेरी चन्द्रावतीलाई प्रद्युम्नको हातमा सुम्पन चाहन्छु । हजुरले त्यो कार्य सम्पन्न गराउनुपर्नेछ । त्यसलाई सम्पन्न गराई हजुर द्वारका जानुहोस् ॥३७४॥

मार्कण्डेयले भन्नुभयो – हे गरुडध्वज ! त्यस्तै होस् भनेर मुनिवरले प्रस्थान गरे । पशुपतिनाथमा गएर वाग्वतीको जलमा नुहाएर विधिपूर्वक सन्ध्योपासना गरेर, पितामहहरूलाई तर्पण दिई वत्सला देवीलाई हेरेर पशुपतिनाथ कहाँ जानुभयो । पशुपति देवलाई हेरी विधिपूर्वक पूजा गरी प्रदक्षिणा पनि गरेर दक्षिण ढोकामा आउनुभयो । त्यहाँ एकाग्र चित्तले बसेका भगवान्ले जप गर्नुभयो । पशुपतिको शुभ स्थानमा माधव आएको सुनेर दोलागिरिमा बस्ने सबै ब्राह्मणहरू आए । तप र स्वाध्यायमा लागेका वेद र वेदाङ्गमा पारङ्गत भएका ऋष्याश्रममा बस्ने सबै मुनिहरू आए । वागीश्वरमा रहने सबै मुनिहरू

आए। जो मुनिहरू सधैँ श्लेष्मान्तकमा रहन्थे, ती सबै कृष्णको दर्शन गर्ने इच्छाले आए। वेदवेदाङ्गमा पारङ्गत भएका ती मुनिहरूलाई देखेर ब्रह्मण्यदेव भगवान्‌ले बारम्बार ढोग्नुभयो र उहाँले तिनीहरूलाई अनेक दानहरू दिनुभयो ॥३८-४८॥

मुनिहरूमा ठूलो तेज भएका उग्र तपस्याका खानी नेमिले दाहिने हात उठाएर शास्त्रको सार कुरो भने – यो हाम्रो अहोभाग्य हो, हामीहरूको तपस्या सफल भयो किनकि एकै ठाउँमा देव हरि र हर दुबै प्रभु देखिनुभयो। हामी कृतार्थ छौँ र धन्य पनि छौ , चर्मचक्षुले पुराणपुरुष हरि र हर दुबै देव देखिनुभयो। जसले हरिलाई हर रूपले र हरलाई हरिरूपले हेर्दछ, त्यो नै वैष्णव र शैव पनि हो। जो मानिसमा अधमहरू हरि र हरमा भेद गर्छन् ती पाखण्डी वेदबाहिरका र नरकगामी हुन्। गङ्गा र गौरीमा तथा शङ्कर र कृष्णमा जो अभेद देख्दछन्, ती मानिसहरू निश्चय नै धन्य हुन् र कृतार्थ हुन्। नेमिको यस्तो वचन सुनेर मुनिका अगाडि रहेका देव पशुपति र हरि अत्यन्त खुसी हुनुभयो ॥५५॥ मुनिशार्दूल जैमिनि ! मेरो कुरा सुन्नुहोस्, अनि खुसी भएका पशुपतिदेवले मुनिलाई भन्न लाग्नुभयो ॥४९-५६॥

श्री पशुपतिले भन्नुभयो – मुनिहरूमा श्रेष्ठ नेमि तपाईंदेखि खुसी छु र भन्छु, यो श्लेष्मान्तक वनमा मृगरूपले जहाँ घुमेँ पानी पिएँ सुते र रहेँ त्यही हे असल ब्राह्मण ! मेरा तीर्थ भए। यो श्लेष्मान्तक वनमा पहिल्यै वासुकिले तपस्या गरे, वासुकिको नामले यो क्षेत्र प्रसिद्ध हुनेछ। नेमि तपाईं यस ठाउँका मुनिहरूको अगुवा हुनुहोस्, हे तपोधन ! मेरो वचनबाट तपाईंले यस क्षेत्रको पालना गर्नुहोस् ॥५७-६०॥

मार्कण्डेयले भन्नुभयो – हिमालयको काखमा रहेको त्यो क्षेत्र पुण्यात्मा नेमि मुनिले पालना गरिएको हुनाले नेपाल नामको भयो। त्यसपछि नारद र प्रद्युम्न साथ लागेका मधुसूदन सबै मुनिहरू र सूर्यकेतु राजासँगै पशुपतिको आज्ञा पाएर गुह्येश्वरीको दर्शन गर्न जानुभयो। गुह्येश्वरीदेवीको दर्शन गरेर गोकर्णेश्वरलाई पनि दर्शन गरी ठूलो उत्साहका साथ महेन्द्रशिखरमा जानुभयो। वाग्वतीको मूलमा नुहाएर अनेकौँ दान दिई महेन्द्रको घर जस्तो सूर्यकेतुको घरमा जानुभयो ॥६१-६५॥

नारदले युक्त भएका महाभाग सूर्यकेतुले विधिपूर्वक राम्री चन्द्रावती छोरी प्रद्युम्नलाई दिए। देवदुन्दुभिहरू बजे, फूलको वर्षा भयो, विचित्र माला र कपडा विचित्रका गहनाहरूले छोरोसहितकाश्रेष्ठ देवता मधुसूदनको पूजा गर्नुभयो। पाउजेवका आवाजसँगसँगै अप्सराहरू नाचे, गन्धर्वहरूले गीत गाए, किन्नरहरूले पनि हर्षसाथ गाए, पवित्र बास्ना उडाउने स्वच्छ हावा पनि बह्यो। दोस्रो चन्द्रलेखा जस्तो बुहारी चन्द्रावतीलाई देखेर आश्चर्यले उत्फुल्ल मन भएका विष्णु भगवान् खुसी हुनुभयो। अलङ्कारले खूब भकिभकाउ भएकी, प्रद्युम्नको साथमा रहेकी चन्द्रावतीदेवी पनि राजलक्ष्मी झैँ शोभित भइन्। पराक्रमीहरूमा श्रेष्ठ प्रद्युम्नलाई जुवाईं पाएर श्रीमान् सूर्यकेतु राजा पनि ज्यादै नै खुसी भए। शरीरमा श्रीखण्डको चन्दन लेपिएका इन्द्रनीलको जस्तो कान्ति भएका, शङ्ख, चक्र, गदा हातमा भएका, देवता र गन्धर्वले पूजिएका, ऋषिहरूका देव शब्दले खुसी भएका, रोमाञ्चित भएका भगवान् मधुसूदन गरुडमा चढ्नुभयो ॥६६-७४॥

रानी चन्द्रावतीलाई र राजपुत्री प्रभावतीलाई पनि केशवको आज्ञाद्वारा प्रद्युम्नले रथमा चढाए। सबै रत्नको समूह र स्त्रीरत्नहरूले भरिभराउ भएको, इच्छामाफिक हिँड्ने सुनबाट बनेको उत्तम रथमा ती प्रद्युम्न चढे। केशवको आज्ञाद्वारा कुटुम्बले सहित भएका सूर्यकेतु इच्छामाफिक हिँड्ने दिव्य रथमा कुवेर पुष्पकमा चढे झैँ चढे। हर्षयुक्त, प्रद्युम्न र मुनिले सहित इन्द्रनीलको जस्तो कान्ति भएको रथ आकाशमा उड्यो। बेजोडको ठाउँ र राम्रो वाग्वती नदीलाई देखेर खुसी भएका भगवान् विष्णुले यो कुरा भन्नुभयो – हेर, मृगेन्द्रशिखरको पर्वतको दक्षिणभागमा चन्द्रदीप्तिको त्यस किनारामा मेरो पुण्यस्थान हुनेछ। सिंहको रूप लिएर म जहाँ सधैँ बसेँ, त्यहाँ मेरा भक्तजनहरूले पूजा गर्नेछन्। शक्रनदीको शुभ तीरमा इन्द्रेश्वरको स्थापना गरेर भगवान् इन्द्रले मनोहर यज्ञ गर्नुभयो ॥७५-८२॥

राम्रो दोलागिरिको टकुरामा सधैँ मेरो वास हुन्छ, श्रेष्ठ शिखर भनेर पृथ्वीतलमा भन्नेछन्। हे प्रद्युम्न ! मकरध्वज ! प्रकट भएको मलाई मानिसहरूले पूजा गर्नेछन्। स्वाध्यायशाली धेरै ब्राह्मणहरू यहाँ छन्। त्यहाँ सधैँ सन्ध्याकालमा विशेष गरेर जमघट हुनेछ। राम्रो सर्वौषधि गिरिको फेदीमा कर्कोटकह्रद हेर, जहाँ कर्कोटक आदि नागेन्द्रहरू रमाउँछन्। दुनियाँले पूजिएको वाग्वती र मणिमतीको मूल फुटेको ठाउँमा जान्छु मात्रै भन्नाले पनि पाप नाश हुन्छ। मणिमतीको मूल फुटेको ठाउँमा जति पाइला चालिए त्यति सय वर्ष शिवभक्त स्वर्गमा खुसी भएर रहन्छन्। मानिसले पूजिएको वाग्वती र मणिमतीको मूलमा जो सधैँ नुहाउँछ, त्यसलाई पुण्यवान् भनिन्छ। त्यसैको नजिकमा उत्पन्न भएको जुन रुद्रधारा छ, त्यो देवदेवले कल्पना गरिएको हो। शिवको मायाले बनाइएको भुक्ति मुक्ति दिने रुद्रधारालाई दर्शन गरेर सबै पापबाट छुटिन्छ। गया नैमिष अथवा कुरुक्षेत्र र पुष्करभन्दा पनि मणिमतीको सङ्गममा नुहाउनु दश गुना बढी हुन्छ भन्ने जान्नू। हे नारद ! राम्रो वीरभद्रको दोभान हेर्नुहोस्, जहाँ पहिल्यै आफैँ हनुमान्‌ले लिङ्गस्थापना गरे। वीरावतरण तीर्थमा भद्र नदीको सङ्गममा जो विधिपूर्वक नुहाउँछ, त्यो वीरलोक जान्छ। पहिल्यै वाल्मीकिले यहाँ रामायणको कथा पनि बनाए ॥८३-९४॥

चम्पा नदीको दोभानमा भएको पापनाश गर्ने तीर्थलाई मुनिहरूले तीर्थ भनेर बताए। हाँस कारण्डवहरू जताततै भएको,

चखेवाले शोभित भएको र मनोहर जल भएको यो मनोहरा नदीलाई हेर्नुहोस्। मनोहरा र वाग्वतीको बीचमा रहेको जुन भाग छ, त्यो सधैं धर्म बढाउने धर्मभूमि भनेर बताइयो। पवित्र जल भएको, महापाप नाश गर्ने, महादेवको मुखबाट उत्पन्न भएको, नदीहरूमा श्रेष्ठ, यो वाग्वतीलाई हेर्नुहोस्। नदीहरूमा श्रेष्ठ वाग्वती हुन्, त्यसमा जहाँ कहीं नुहाइयो भने वाजपेय र अश्वमेधको फल जान। मनोहरा र वाग्वतीको राम्रो दोभानलाई हेर्नुहोस्, जहाँ नुहाउनाले मानिस ब्रह्मलोकमा जान्छ। फींज र छालले सेतो भएको राम्रो विष्णुपदी नदीलाई हेर्नुहोस्, जहाँ नुहाउनाले मानिसले विष्णुलोक देख्छ ॥॥९५–१०१॥

वाग्वती र विष्णुमतीको बीचमा जुन ठाउँ छ त्यसलाई सिद्धभूमि भनियो त्यहाँ पाप छैन। पुलहाश्रमको तल रुद्रमतीको दोभानमा स्नान गर्दा सूर्य खुसी हुन्छन् र त्यो सूर्यलोक जान्छ। विष्णुपदी तटको तीर्थमा टङ्केश्वरलाई हेर वाग्वती र विष्णुमतीको दोभान ज्यादै पुण्य दिने ठाउँ हो। हे प्रद्युम्न ! जहाँ पाँच लिङ्गहरू छन् यसैले त्यसको नाम पञ्चलिङ्ग तीर्थ भनेर राखियो। पञ्चलिङ्ग नामको तीर्थको दोभानमा नुहाओस् त्यसको शरीरमा कहिल्यै पाप रहँदैन बाबु। वाग्वती र विष्णुमतीको मनोहर दोभानमा पहिल्यै शिवका लागि सतीको घुँडो हरिले काटिदिनुभएका थियो ॥१०२–१०७॥

यस पीठमा जो जप गर्छन् निश्चय ती कृतार्थ हुन्छन्। सर्वौषधि पर्वतको दक्षिण गुफामा त्यहाँ पनि हे प्रद्युम्न ! मेरो आवास हुनेछ। झषध्वज क्षेत्रपालको प्रभावले रक्षा गरिएको त्यही एउटा ठाउँ लोकहरूका लागि दुर्गम र सुगम पनि हुनेछ। तिम्रै हातबाट मारिएको कच्छपासुर विराधलाई हेर मानिसहरू यसलाई कूर्मपर्वत भन्नेछन्। दैत्यको प्रभावबाट त्यस पर्वतको वरिपरि निश्चय अन्नपात बढ्नेछ। पुण्य गर्नेहरू बसेको यो पवित्र कूर्मगिरिमा जहाँ जहाँ पानी रहेको छ, त्यहाँ त्यहाँ तीर्थ हुनेछ। कच्छप पर्वतको फेदीमा रहेको वाग्वतीको सङ्गमको पश्चिम तीरमा गई नुहाउनाले इच्छा गरेको फल पाउँछ। यस कूर्मगिरिको फेदीमा वाग्वतीको पश्चिमभित्र लोकले पूजिएका गणेश हुनेछन्। त्यहाँ पनि मुश्किलले जानिने मेरो स्थान हुनेछ। त्यहाँ वाग्वतीमा नुहाउनाले पनि मानिस पुण्यवान् हुन्छ। सेतु फोरिएको रमणीय तीर चन्दनागिरि पर्वतमा विष्णुतीर्थ भनेर प्रसिद्ध छ, त्यो मेरो स्थान हुनेछ। पवित्र मीनचक्रह्रदको अगाडि मेरो उत्पत्ति स्थल हो। द्वादशीमा नुहाउनाले मात्रै मेरो लोकमा रहन पाउँछ। पतिव्रता नारीमा वेदमा पारङ्गत ब्राह्मणमा र मेरो क्षेत्रमा पनि जुन दिइन्छ, त्यो अक्षय हो भनी ठान। चन्दनागिरिको फेदीमा इच्छित वस्तु दिने तीर्थ हेर, हे बाबु ! यहाँ स्वयं महादेवीले चन्दन घोटेकी थिइन्। विभिन्न रत्नको कान्तिले युक्त सुप्रभा भवन पनि भत्काइयो मारेर बाँकी रहेका दैत्यहरू पनि रसातल गए। यति भनेर देवताले पूजा गरिएका गणसहितका भगवान् विष्णु परमदुर्लभ क्षेत्रमा गरुडबाट ओर्लिनुभयो ॥१०८–१२१॥

स्कन्दपुराण अन्तर्गत हिमवत्खण्डमा नेपालमाहात्म्यको एघारौं अध्याय पूर्ण भयो।

## अथ द्वादशोऽध्यायः

श्रीकृष्णसूर्यकेतुकथा (श्रीकृष्ण र राजा सूर्यकेतुको कथा)

मार्कण्डेय उवाच

ततोऽतितुष्टो गोविन्दः सपुत्रो मुनिसंयुतः। लिङ्गं संस्थापयामास गोपालेश्वरमुत्तमम् ॥१॥
प्रद्युम्नश्चापि सन्तुष्टः पितृभक्तिसमन्वितः। शिवनारायणनाम्ना स्थापयामास यत्नतः ॥२॥
कृष्णेन स्थापितं लिङ्गं गोपालेश्वरमुत्तमम्। ये द्रक्ष्यन्ति नरा भाग्यास्ते कृतार्था न संशयः ॥३॥
प्रद्युम्नस्थापितां विष्णुमूर्त्तिं द्रक्ष्यन्ति ये नराः। इह लोके सुखं स्थित्वा यान्ति ते परमां गतिम् ॥४॥
नेपाले दुर्लभे क्षेत्रे कृष्णेन स्थापितं स्वयम्। गोपालेश्वरनामानं ये द्रक्ष्यन्ति कलौ युगे ॥५॥
तेषां तुष्टो मुररिपुर्विष्णुर्लोकं प्रयच्छति। संस्थाप्य लिङ्गं गोविन्दो नारदं वाक्यमब्रवीत् ॥६॥
गच्छ द्वारावतीं विप्र वेगेन महता पुनः। प्रद्युम्नविजयः शीघ्रमुग्रसेनाय कथ्यताम् ॥७॥
श्वेतकायामहं गत्वा सपुत्रो धातृनन्दन। करिष्यामि च राजानं सूर्यकेतुं मदाश्रयम् ॥८॥

मार्कण्डेय उवाच

इति माधववाक्यान्ते नारदो द्वारकां ययौ। गत्वा च कथयामास राज्ञे सर्वं विशेषतः ॥९॥
आदिदेश ततो राजा पुरशोभा विधीयताम्। रुक्मिण्यपि तदा श्रुत्वा सुतस्य जयमुत्तमम् ॥१०॥
आहूय च सखीः सर्वा हर्षाद्वचनमब्रवीत्। महेन्द्रदमनं हत्वा दुर्जयं देवकण्टकम् ॥११॥
प्रभावतीमुपादाय दैत्यस्य भगिनीं शुभाम्। सूर्यकेतोः सुतां रम्यां नाम्ना चन्द्रावतीं शुभाम् ॥१२॥
गृहीत्वा हि समायाति प्रद्युम्नस्तनयो मम। प्रद्युम्नं यदि द्रक्ष्यामि मृत्योरास्यादुपागतम् ॥१३॥

क्रियतां मङ्गलं तस्मात् सर्वाभिर्वचनान् मम। अथ ता मङ्गलं चक्रू रुक्मिणीवचनात् तदा ॥१४॥
गृहीतपूर्णकलशास्तस्थुः पङ्कजलोचनाः। दीपद्रुमकराः काश्चित् काश्चिद्धूपकरास्तथा ॥१५॥
चित्रमाल्याम्बरधरा विलोलायतलोचनाः। रक्तभाजनहस्ताश्च स्थिताः काश्चिद्वराङ्गनाः ॥१६॥
द्वारकावासिनः सर्वे विशेषकृतभूषणाः। सपुत्रं केशवं द्रष्टुं निर्ययुर्माल्यधारिणः ॥१७॥
नानावादित्रनिर्घोषैः कम्पयन्तो वसुन्धराम्। निर्ययुर्यादवाः सर्वे बलभद्रपुरोगमाः ॥१८॥
तस्थुः सर्वे पुरद्वारि कृष्णागमनकामुकाः। माधवोऽपि ततः शीघ्रं सूर्यकेतुमन्वितः ॥१९॥
सपुत्रः प्रययौ शीघ्रं श्वेतकां नगरीं शुभाम्। अवतीर्णः पुरद्वारि सगणो मधुसूदनः ॥२०॥
आगतं माधवं श्रुत्वा हंसध्वजमहीपतिः। प्रत्युद्गम्य चादरेण सपर्यापात्रसंयुतः ॥२१॥
पूजयित्वा यथान्यायं गोविन्दं भूपतिस्तदा। कृताञ्जलिपुटो भूत्वा वचनं निजगाद ह ॥२२॥

हंसध्वज उवाच

सफलं जन्म गोविन्द तव दर्शनतो मम। प्रविश्य तां पुरीं शीघ्रं पवित्रीकुरु मे गृहम् ॥२३॥
दासोऽहं तव गोविन्द कृपां कुरु दयानिधे। अद्य विश्राम्य गन्तासि प्रभाते द्वारकां पुरीम् ॥२४॥
अजेयः सुरनाथेन महेन्द्रदमनोऽसुरः। तव प्रसादाद् गोविन्द प्रद्युम्नेन यतो हतः ॥२५॥
सूर्यकेतुरयं धन्यो सम्बन्धी यस्य माधवः। इयं प्रभावती देवी देवी चन्द्रावती तथा ॥२६॥
अन्तःपुरं प्रविश्याशु सत्कारं लभतामिति। आज्ञापय हृषीकेश किं करोमि तव प्रभो ॥२७॥

श्रीगोविन्द उवाच

इति तस्य वचः श्रुत्वा गोविन्दः प्राह तं नृपम्। साधु साधु नृपश्रेष्ठ हंसध्वजमहीमते ॥२८॥
श्रूयतां नृपशार्दूल यदर्थमहमागतः। सूर्यकेतुश्च सम्बन्धी मद्भक्तो नरसत्तमः ॥२९॥
त्वयाऽस्य सकलं राज्यं हृतं बाहुबलेन च। तदस्मै दीयतां राज्यं हंसध्वजमहीपते ॥३०॥
मम वाक्यान्महीपाल नात्र कार्या विचारणा। दत्वाऽस्मै श्वेतकाराज्यं मिथिलां व्रज भूपते ॥३१॥

हंसध्वज उवाच

गोविन्दवचनं श्रुत्वा प्राह हंसध्वजो नृपः। धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम ॥३२॥
शरीरमर्थं प्राणाँश्च भवते विनिवेदये। सूर्यकेतुनृपायास्मै श्वेतका दीयते मया ॥३३॥

मार्कण्डेय उवाच

पवित्रीकुरु मद्गेहं सर्वथा गरुडध्वज। ततोऽतितुष्टो गोविन्दो हंसध्वजनृपालयम् ॥३४॥
प्रविवेश महाबाहुः सूर्यकेतुसमन्वितः। स्वर्णसिंहासने रम्ये निविष्टं मधुसूदनम् ॥३५॥
नृपतिः पूजयामास नानारत्नैरुदारधीः। सूर्यकेतुनृपायापि श्वेतकां प्रददौ नृपः ॥३६॥
अनुज्ञां प्राप्य गोविन्दात् ततो हंसध्वजो नृपः। मिथिलां प्रययौ धीमान् सगणः सपरिच्छदः ॥३७॥
सूर्यकेतुस्ततो लब्ध्वा राज्यं गोविन्दतेजसा। मेने कृतार्थयात्मानं परमानन्दसंयुतः ॥३८॥
पूजयामास गोविन्दं महाविभवविस्तरैः। प्रणम्य दण्डवद् भूमौ कृताञ्जलिपुटोऽब्रवीत् ॥३९॥

सूर्यकेतुरुवाच

त्वया नाथेन गोविन्द राज्यं परमदुर्लभम्। मया लब्धं प्रयत्नेन कीर्तिः परमदुर्लभा ॥४०॥
नाथवन्तो वयं जाता त्वया नाथेन माधव। इदानीं न यमस्यापि भयमस्ति मम प्रभो ॥४१॥
अद्य विश्राम्यतां नाथ गेहे मे मधुसूदन। प्रातर्गन्तासि नगरीं द्वारकां सह बान्धवैः ॥४२॥
पवित्रं कुरु मे वीर शिरश्चरणरेणुना। दासे कृपां कुरु सदा भक्तवत्सल माधव ॥४३॥
इत्याकर्ण्य वचस्तस्य भूपतेर्मधुसूदनः। जगाद वचनं भूयो मेघगम्भीरया गिरा ॥४४॥

श्रीकृष्ण उवाच

साधु साधु महाभाग सूर्यकेतो महीपते। मद्भक्तोऽसि कृतज्ञोऽसि धन्योऽसि बलवानसि ॥४५॥
इह लोके सुखं भुक्त्वा महाविभवविस्तरैः। सशरीरो दिवं गन्ता भवानन्ते न संशयः ॥४६॥
सूर्यकेतुस्ततस्तुष्टो नानारत्नैर्मनोहरैः। पूजयामास गोविन्दं प्रद्युम्नं च विशेषतः ॥४७॥

प्रभावत्यै ददौ राजा दिव्यानि वसनानि च। रत्नानि च विचित्राणि दासीश्च समलङ्कृताः ॥४८॥
चन्द्रावत्यै महार्हाणि वसनाभरणानि च। निष्ककोटीः शतं दासीः प्रददौ भूपसत्तमः ॥४९॥
सूर्यकेतुमहीपालपूजितं गरुडध्वजम्। पूजयामासुरत्युच्चैर्यादवा जातविस्मयाः ॥५०॥
ततः सपुत्रः पुरकामिनीकरैर्विमुक्तमन्दाररजोरुणच्छविः। जनार्दनो दानवदर्पसूदनो मनोरमां द्वारवतीं विवेश हि ॥५१॥

मार्कण्डेय उवाच

यः पठेत् प्रयतो नित्यं प्रद्युम्नविजयं शुभम्। नश्यन्ति रिपवस्तस्य सङ्ग्रामे जयमाप्नुयात् ॥५२॥
विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात्। कन्यार्थी लभते कन्यामपुत्रः पुत्रमाप्नुयात् ॥५३॥
प्रद्युम्नविजयं रम्यं क्षत्रियो यः शृणोति च। रिपून् सर्वान् विनिर्जित्य महाराजो भवेदिह ॥५४॥
प्रद्युम्नविजयं रम्यं यो वैश्यः शृणुयाच्छुभम्। धनधान्यसमृद्धः स्यादन्ते याति परां गतिम् ॥५५॥
शूद्रः शृणोति चेद् भक्त्या प्रद्युम्नविजयं शुभम्। इह लोके सुखं भुक्त्वाऽप्यन्ते याति परां गतिम् ॥५६॥
प्रद्युम्नविजयं श्रुत्वा गुर्विणी जनयेत् सुतम्। यं यं प्रार्थयते कामं तं तं काममवाप्नुयात् ॥५७॥
हतराज्येन भूपेन श्रोतव्यं च विशेषतः। अलभ्यं लभते राज्यं नात्र कार्या विचारणा ॥५८॥
श्राद्धकाले पठेद्यस्तु प्रद्युम्नविजयं शुभम्। पितरस्तस्य तृप्यन्ति शरदामयुतं पुनः ॥५९॥
इति श्रीस्कन्दपुराणे हिमवत्खण्डे नेपालमाहात्म्ये प्रद्युम्नविजयो नाम द्वादशोऽध्यायः ॥१२॥

---

मार्कण्डेयले भन्नुभयो – अनि पुत्र र मुनिसहित अत्यन्त प्रसन्न हुनुभएका गोविन्दले उत्तम गोपालेश्वर लिङ्गको स्थापना गर्नुभयो ॥१॥ खुसी भएका पितृभक्त प्रद्युम्नले पनि मेहनतसाथ शिवनारायण नामले मूर्ति स्थापना गरे ॥२॥ कृष्णले स्थापना गरिएको उत्तम गोपालेश्वर लिङ्ग जो भाग्यमानी मानिसहरूले दर्शन गर्छन्, ती निश्चय कृतार्थ हुन्छन् ॥३॥ प्रद्युम्नले स्थापना गरिएको विष्णुमूर्ति जो मानिसहरूले दर्शन गर्नेछन्, तिनीहरू यस लोकमा सुखसँग बसेर परम गतिमा जान्छन् ॥४॥ दुर्लभ नेपाल क्षेत्रमा कृष्ण आफैंले स्थापना गरेको गोपालेश्वरलाई कलियुगमा जसले हेर्नेछन्, तिनीहरूसँग खुसी भएका मुरदैत्यका शत्रुले विष्णुलोक दिन्छन्। लिङ्गस्थापना गरेर गोविन्दले नारदलाई भन्न लाग्नुभयो। हे विप्र ! अब छिट्टै फेरि द्वारवतीमा गएर प्रद्युम्नको विजयको समाचार उग्रसेनलाई भन्नुहोस्। हे ब्रह्माका छोरा ! श्वेतकामा म छोरासहित गएर सूर्यकेतुलाई मेरो आश्रयले युक्त बनाउँछु ॥१-८॥

मार्कण्डेयले भन्नुभयो – माधवले यति भनिसकेपछि नारद द्वारका गए। त्यहाँ गएर उनले राजालाई विशेषरूपले सबै कुरा भने ॥९॥ त्यसपछि राजाले शहरको सिंगारपटार गर्ने आज्ञा दिए। छोराको उक्त विजय सुनेर रुक्मिणीले पनि सबै सखीहरू बोलाएर हर्षले भनिन्। विजय गर्न अत्यन्त कठिन देवकण्टकलाई मारेर त्यसकी राम्री बहिनी प्रभावती तथा सूर्यकेतुकी राम्री छोरी चन्द्रावतीलाई लिएर मेरो छोरो प्रद्युम्न आउँदै छन्। मृत्युको मुखबाट आएको प्रद्युम्नलाई मैले देख्नेछु। यसैले सबैले मेरो आज्ञाबमोजिम उनको मङ्गल गर। अनि तिनीहरूले रुक्मिणीको निर्देशन अनुसार मङ्गलको तयारी गरे ॥९-१४॥

कमलका जस्ता आँखा भएकाहरू पूर्ण घडा लिएर रहे। कोही दीपद्रुम हातमा लिएका, कोही धूप हातमा लिएका रङ्गविरङ्गका माला र लुगा लगाएका, लोलाएका आँखा भएका र कोही केटीहरू रातो भाँडो हातमा लिएर रहेका थिए। माला लगाएका विशेष किसिमले सिंगारिएका सबै द्वारकावासीहरू छोरा सहितका केशवलाई हेर्न निस्किए ॥१७॥ विभिन्न बाजाका शब्दले पृथ्वी कमाउँदै बलभद्र आदि गरिएका सबै यादवहरूपनि निस्किए ॥१८॥ कृष्णको आगमन चाहने सबै शहरको ढोकामा बसे। सूर्यकेतु साथ लाग्नुभएका माधव पनि छोरासहित चाँडै नै राम्रो श्वेतका नगरीमा आउनुभयो। गणसहितका मधुसूदन शहरको ढोकामा ओर्लिनुभयो ॥१०-२०॥

माधव आएको सुनी पूजा भाँडा लिएका हंसध्वज राजाले आदरसाथ तत्पर भएर क्रमपूर्वक गोविन्दलाई पूजा गरेर हात जोडी प्रणमगर्दै भन्नलागे – हे गोविन्द ! तपाईंको दर्शनले मेरो जन्म सफल भयो, त्यो शहरभित्र पसेर मेरो घर पवित्र गर्नुहोस्। हे गोविन्द ! म तपाईंको दास हुँ, हे दयानिधि ! ममाथि दया गर्नुहोस्। आज विश्राम गरेर बिहान द्वारकापुरी जानुहोला। हे गोविन्द ! इन्द्रले पनि जित्न नसक्ने महेन्द्रमन दैत्यलाई तपाईंको प्रसादबाट प्रद्युम्नले मारे। यी सूर्यकेतु धन्य हुन्। जसको सम्धी नै माधव हुनुहुन्छ। त्यस्तै यी प्रभावती देवी र चन्द्रावती देवी पनि धन्य छन्, छिटै अन्तःपुरमा पसेर सत्कार ग्रहण गर्नुहोस्। हे हृषीकेश के गरूँ ? आज्ञा होस् ॥२१-२७॥

यस्तो तिनको वचन सुनेर गोविन्दले ती राजालाई भन्नुभयो। राजाहरूमा श्रेष्ठ हे हंसध्वज !हे महीपति ! ठीक छ। हे नृपशार्दूल ! जुन प्रयोवनका निम्ति म आएको हुँ, सुन्नुहोस्। सूर्यकेतु सम्धी मेरो भक्त र असल मानिस हुनुहुन्छ, तपाईंले यहाँको

सबै राज्य बाहुबलले लिनुभयो। त्यसै कारण हे राजा हंसध्वज ! मेरो भनाइ अनुसार यहाँलाई राज्य दिनुहोस् यसमा विचारै नगर्नुहोस्। श्वेतका राज्य यहाँलाई दिएर मिथिला जानुहोस् राजा। गोविन्दको कुरा सुनेर हंसध्वज राजा भन्नलागे॥२८-३१॥

हंसध्वजले भने- शरीर धन र प्राणहरू तपाईंमा चढाउँछु। मेरो जीवन सफल भयो। म धन्य हुँ र कृतकृत्य हुँ। यी सूर्यकेतु राजालाई म श्वेतका दिन्छु हे गरुडध्वज ! क्यै गरेर पनि मेरो घर पवित्र गर्नुहोस्॥३२॥

मार्कण्डेयले भन्नुभयो – त्यसपछि ज्यादै खुसी भएका, सूर्यकेतु राजा सहितका महाबाहु गोविन्दले हंसध्वज राजाको भवनमा प्रवेश गर्नुभयो। उत्तम स्वर्ण सिंहासनमा रहेका मधुसूदनलाई उदार चित्त भएका राजाले अनेक रत्नहरूले पूजा गरे। सूर्यकेतु राजालाई पनि राजाले श्वेतका दिए। गोविन्दबाट आज्ञा पाएर गणले सहित भएका र सबै परिवारले युक्त भएका बुद्धिमान् राजा हंसध्वज मिथिला हिँडे। त्यसपछि परमानन्दले युक्त सूर्यकेतु राजाले गोविन्दको प्रभावबाट राज्य पाएर आफूलाई कृतार्थ ठाने र प्रशस्त सम्पत्तिहरूले गोविन्दलाई पूजा गरे। अनि दण्ड भैँ भुइँमा पस्रिएर प्रणाम गरी हात जोडेर भने॥३३-३९॥

सूर्यकेतुले भने – हे गोविन्द ! हजुर मालिक हुनाले पाइ नसक्नु राज्य मैले प्रयत्नपूर्वक पाएँ, परम दुर्लभ कीर्ति पनि पाएँ। हे माधव ! तपाईं नाथद्वारा हामी नाथ भएका भयौं,हे प्रभु ! मलाई अहिले यमराजको पनि डर छैन। हे नाथ ! हे मधुसूदन ! आज मेरो घरमा विश्राम गर्नुहोस्। बन्धुहरूका साथ बिहान द्वारकानगरी पाल्नुहोला। हे वीर ! मेरो शिर पाउको धूलोले पवित्र गर्नुहोस्, हे भक्तका प्यारा माधव ! दासमा सधैँ कृपा गर्नुहोस्। राजाको यस्तो वचन सुनेर मधुसूदनले मेघको जस्तो गम्भीर बोलीले फेरि भन्नुभयो॥४०-४४॥

श्रीकृष्णले भन्नुभयो – हे महाभाग ! हे सूर्यकेतु ! राजा ठीक छ। तपाईं मेरा भक्त हुनुहुन्छ, कृतज्ञ हुनुहुन्छ, धन्य हुनुहुन्छ र बलवान् हुनुहुन्छ। यस लोकमा धेरै ऐश्वर्यहरूका साथ सुख भोगेर अन्तमा तपाईं निश्चय नै सशरीर स्वर्ग जानुहुनेछ। त्यसपछि खुसी भएका सूर्यकेतुले मनोहर अनेक रत्नले खूबसँग गोविन्दर प्रद्युम्नको पूजा गरे। राजाले दिव्य कपडाहरू, विचित्र रत्नहरू, सिँगारिएका दासीहरू पनि प्रभावतीलाई दिए। धेरै मोल पर्ने वस्त्र र गहनाहरू, करोड असर्फी, सय दासी राजाले चन्द्रावतीलाई दिए। सूर्यकेतु राजाद्वारा पूजिएका गरुडध्वलाई आश्चर्य मानेका यादवहरूले खूबसँग पूजा गरे। त्यसपछि छोरोसँगै भएका शहरका केटीका हातबाट छुटेका मन्दारका धूलाले रातै भएका, दानवको सेखी झार्ने जनार्दन आनन्द दिने द्वारवतीमा पस्नुभयो॥४५-५१॥

इन्द्रिय वशमा राखेर जसले सधैँ यो शुभ प्रद्युम्नविजयको आख्यान पढ्छ, त्यसका शत्रुहरू मासिन्छन् र लडाईंमा पनि जय प्राप्त गर्नेछ। विद्यार्थीले विद्या पाउँछ धन चाहनेले धन पाउँछ, कन्यार्थीले कन्या पाउँछ छोरो नभएकोले छोरो पाउँछ। राम्रो प्रद्युम्नविजय जुन क्षत्रियले सुन्छ, सबै शत्रुलाई जिती त्यो यहाँ महाराज हुन्छ। राम्रो र शुभ प्रद्युम्नविजय जुन वैश्यले सुन्ला, त्यो धन र धान प्रशस्त हुने भएर अन्तमा श्रेष्ठ गतिमा जानेछ। शुभ प्रद्युम्नविजय भक्तिपूर्वक शूद्रले सुन्छ भने यस लोकमा सुख भोगेर अन्तमा श्रेष्ठ गतिमा जानेछ। प्रद्युम्नविजयको कथा सुनेर गर्भिणीले छोरो पाउँछे। जे जे चिताउँछ, त्यसले त्यही त्यही पाउँछ। विशेष गरेर राज्य लुटिएका राजाले सुन्नुपर्छ, नपाइने राज्य पनि पाउँछ, यसमा विचारै गर्नुपर्दैन। शुभ प्रद्युम्नविजय जसले श्राद्धको बेला पढ्छ, त्यसका पितृहरू दश हजार वर्ष तृप्त हुन्छन्॥५२-५९॥

स्कन्दपुराण अन्तर्गत हिमवत्खण्डको नेपालमाहात्म्यमा प्रद्युम्नविजय नामक बाह्रौं अध्याय पूर्ण भयो।

## अथ त्रयोदशोऽध्यायः

भगवतः शिवस्य चन्द्रमसश्च कथा (भगवान् शिव र चन्द्रमाको कथा)

जैमिनिरुवाच

तपोधन मुनिश्रेष्ठ त्वद्वक्त्राम्बुजनिर्गतम्। प्रद्युम्नविजयं श्रुत्वा न तृप्तिमधियाम्यहम्॥१॥
नेपाले दुर्लभे क्षेत्रे यान्यन्यानि तपोधन। तानि लिङ्गानि कथय श्रोतुमिच्छा प्रजापते॥२॥

मार्कण्डेय उवाच

सन्ति लिङ्गान्यनेकानि नेपाले क्षेत्रसत्तमे। सोमलिङ्गसमं लिङ्गं न भूतं न भविष्यति॥३॥
सोमेश्वरं कृतयुगे त्रेतायां सोमनाथकम्। सोमशम्भुं द्वापरे हि सोमलिङ्गं कलौ युगे॥४॥
युगे युगे नाम तस्य वदन्ति मुनयो द्विज। गुप्तं मुने सोमलिङ्गं न सर्वो वेत्ति मानवः॥५॥

जैमिनिरुवाच

सोमेश्वरसमुत्पत्तिं ब्रह्मन् कथय मे पुरः। श्रद्धा मे महती तस्मिन् सोमलिङ्गे द्विजोत्तम ॥६॥

मार्कण्डेय उवाच

शृणु सावहितो वत्स सोमेश्वरसमुद्भवम्। यस्य श्रवणमात्रेण नरो मुच्येत पातकात् ॥७॥
ओषधीनामधिपतिः पुरा कृतयुगे मुने। सोमो बभूव राजेन्द्रः सर्वविद्याविशारदः ॥८॥
वशं चकार त्रैलोक्यं निजबाहुबलेन च। एकदा गुरुमाहूय चन्द्रमा बलदर्पितः ॥९॥
प्रश्रयावनतो भूत्वा वचनं चेदमब्रवीत्।

चन्द्रमा उवाच

बृहस्पते द्विजश्रेष्ठ श्रूयतां वचनं मम ॥१०॥
राजसूयेन यज्ञेन यष्टुमिच्छामि सर्वथा। मां याजय गुरो भक्तं शरणं त्वामुपागतम् ॥११॥
श्रुत्वा चन्द्रमसो वाक्यं वाचस्पतिरुवाच ह।

बृहस्पतिरुवाच

राजसूयसमो यज्ञो कश्चिन्नान्योऽस्ति निश्चतम् ॥१२॥
राजसूयेन यज्ञेन न यष्टव्यं त्वया विभो। राजसूये महाविघ्ना जेतव्या सकला मही ॥१३॥
कर्ता दुःखमवाप्नोति याजकोऽपि ततोऽधिकम्। अत एव कलानाथ राजसूयो भयावहः ॥१४॥
तस्मात् त्वया न यष्टव्यं राजसूयेन सर्वथा। श्रुत्वा वाक्यं गुरोः सोमः पुनः प्रोवाच सादरम् ॥१५॥

सोम उवाच

अवश्यमेव यष्टव्यं राजसूयेन भो मया। त्वत्सहायस्य मे नाथ नासाध्यं विद्यते क्वचित् ॥१६॥
त्वया श्रमेण मा मुञ्च जीव मे वरदो भव। बृहस्पतिः सोमवचः श्रुत्वा प्राह कलानिधिम् ॥१७॥

बृहस्पतिरुवाच

एवं ते निश्चयः सोम राजसूयक्रतुं शिवम्। अवश्यं याजयिष्यामि भवन्तं हि कलानिधे ॥१८॥
निर्जित्य सकलां पृथ्वीं नानारत्नान्युपाहर।

मार्कण्डेय उवाच

एक एव कलानाथो रथेनैकेन केवलम् ॥१९॥
एकेन धनुषा चापि जित्वा च सकलां महीम्। ततः सुमेरुनिकटे यज्ञशालां विधाय च ॥२०॥
सम्भारं कारयामास नक्षत्राणामधीश्वरः। यावन्ति यज्ञपात्राणि सौवर्णानि चकार हि ॥२१॥
अन्नानां पर्वतांश्चक्रे सुमेरुसदृशांस्तथा। नानाविधानां सूपानां नद्य एव विनिर्मिताः ॥२२॥
मधुकुल्या दुग्धकुल्याः सर्पिःकुल्या विनिर्मिताः। दधिकुल्यास्तैलकुल्याः कोटिशो रचितास्तदा ॥२३॥
आसनानि विचित्राणि राङ्कवास्तरणानि च। कम्बलानामसंख्यातं नानादेशाहृतं तथा ॥२४॥
आजहार तदा सोमो निजबाहुबलेन च। स्वापभूमिः पानभूर्भिनानारत्नैर्विनिर्मिता ॥२५॥
ततो बृहस्पतिर्दीक्षां कारयामास तं विधुम्। एवं महाविधे यज्ञे प्रवृत्ते सर्वदेवताः ॥२६॥
आजग्मुश्च सपत्नीका महादेवपुरोगमाः। हाहाहूहूप्रभृतयो गन्धर्वाः समुपागताः ॥२७॥
विद्याधराः समायाता अप्सरोभिः समन्विताः। आयाताश्च नृपाः सर्वे सप्तद्वीपनिवासिनः ॥२८॥
आगता मुनयः सर्वे नानादेशनिवासिनः। वैदिकास्तार्किका ये च काव्यकोषविदस्तथा ॥२९॥
वैद्या ज्योतिर्विदश्चापि सर्व एव समागताः। गायका नर्तकाश्चापि वादकाश्च समागताः ॥३०॥
वाराङ्गनाः समायाता भिक्षुकाश्च तथैव च। दीयतां भुज्यतां चेति श्रूयते निनदो महान् ॥३१॥
शास्त्रचर्चा काव्यचर्चा वेदचर्चा तथैव च। पुराणानां तथा चर्चा नान्यचर्चा हि विद्यते ॥३२॥
आगतेभ्यो ददौ सोमो वाञ्छितादधिकं धनम्। ततो निवर्तयामास राजसूयं कलानिधिः ॥३३॥
ततोऽवभृथमारेभे नक्षत्राणामधीश्वरः। सौवर्णपूर्णकुम्भैश्च नानामन्त्राभिमन्त्रितैः ॥३४॥

चतुर्वेदोक्तमन्त्रैश्च जयघोषैर्मनोहरैः। नानावादित्रनिर्घोषैः स्नानं चक्रे कलानिधिः ॥३५॥
स्नानान्ते चन्द्रमास्तारां गुरोः पत्नीं मनोहरम्। वीक्ष्य कामाभिभूतोऽभूद् भाविनोऽर्थस्य गौरवात् ॥३६॥
तारा चन्द्रमसं वीक्ष्य नेत्रानन्दकरं शुभम्। चकमे गुरुकामा च चाञ्चल्यं स्त्रीषु सर्वदा ॥३७॥

मार्कण्डेय उवाच

ततो जग्राह तां तारां गुरोरग्रे कलानिधिः। स्वाग्रे गृहीतां रमणीं वीक्ष्य प्राह गुरुस्तदा ॥३८॥

बृहस्पतिरुवाच

राजसूयक्रतुं कृत्वा गुरुपत्न्या विशेषतः। हरणे रजनीनाथ न ते धर्मभयं कथम् ॥३९॥
लज्जामपि परित्यज्य देवब्राह्मणन्निधौ। तेन धर्मविधैर्वाक्यैर्वारितोऽपि कलानिधिः ॥४०॥
अन्तःपुरं विवेशाथ तारया वरहारया। हाहाकारो महानासीत् त्रिविष्टपनिवासिनाम् ॥४१॥
रेमे तया कलानाथः कामशास्त्रविशारदः। जीवोऽपि दुःखसन्तप्तः सुरनाथं जगाद हि ॥४२॥
देवेन्द्र सर्वदेवस्य नियन्ताऽसि भवान् यतः। पुरोहितस्य विप्रस्य भवदग्रे विशेषतः ॥४३॥
चन्द्रेण ह्रियते पत्नी किं वदामि तवाग्रतः। त्रिविष्टपस्य रक्षार्थमिन्द्रत्वे स्थापितो भवान् ॥४४॥
ब्रह्मणा लोकगुरुणा सर्वप्राणिनमस्कृतः। बलिभिः पीड्यमानस्य राजा षष्ठांशमाहरन् ॥४५॥
यदि रक्षां न कुरुते रौरवं नरकं व्रजेत। पुत्रे भ्रातरि चामात्ये निर्धने पुक्कसेऽथ वा ॥४६॥
समं च कुरुते न्यायं स राजा स्वर्गमाप्नुयात्। प्रजानां रक्षणाद्राजा प्रजानां रक्षणे यदि ॥४७॥
नोद्योगं कुरुते मोहान्मात्सर्ये यः प्रवर्तते। तस्य राज्ञो राज्यभ्रंशो भवत्येव न संशयः ॥४८॥

मार्कण्डेय उवाच

इति नानाविधैर्वाक्यैर्बोधितो गुरुणा तदा। तूष्णीमासीद्वज्रपाणिश्चन्द्रविक्रमभीतितः ॥४९॥
न सूर्यो वरुणो नैव न वायुर्बलिनां वरः। न कुबेरो न वा वह्निरुत्तस्थौ चन्द्रभीतितः ॥५०॥
न देवा न च गन्धर्वा न यक्षा नासुरास्तथा। न राजानः समुत्तस्थुश्चन्द्रतेजोऽतिविस्मिताः ॥५१॥
चन्द्रविक्रमभीतांस्तु सदेवासुरमानुषान्। वीक्ष्य तस्थौ महादेवो वचनं च जगाद ह ॥५२॥

श्रीमहादेव उवाच

इमां देवसभां धिग्धिग्देवानां विक्रमं च धिक्। अनादृत्य सुरान् तथा दानवभूमिपान् ॥५३॥
मां च विष्णुमनादृत्य विधुना दुष्टबुद्धिना। धर्मपत्नी ब्राह्मणस्य गुरोश्चैव विशेषतः ॥५४॥
राजसूयक्रतुं कृत्वा ह्रियते ज्ञानलाघवात्। अहं पिनाकमादाय कृत्वा चन्द्रमसं रणे ॥५५॥
करिष्यामि क्षणेनैव गुरोरश्रुप्रमार्जनम्। इत्युक्त्वा गिरिजानाथो धृत्वा दिव्यं महद्धनुः ॥५६॥
उत्तस्थौ सगणः कोपात् त्रिलोकीं निर्दहन्निव। पिनाकपाणिमायान्तं युद्धाय रजनीकरः ॥५७॥
श्रुत्वा रथं समारुह्य निर्ययौ भवनात् ततः। ततश्चकम्पे वसुधा चेलुः सर्वे महीधराः ॥५८॥
ववौ च परुषो वायुः पेतुरुल्काः सहस्रशः। दिशः सतिमिरा मेघा ववर्षू रुधिरं बहु ॥५९॥
हाहाकारो महानासीत् त्रिविष्टपनिवासिनाम्। ततः समभवद्युद्धं चन्द्रशङ्करयोस्तदा ॥६०॥
बाणान्धकारसञ्छन्नं जगदासीत् समाकुलम्। पश्यतां सर्वदेवानां निजवीर्यं प्रदर्शयन् ॥६१॥
युयुधे चन्द्रमा विप्र शङ्करेण समं तदा। छादयामास विशिखैः शङ्करं बलदर्पितः ॥६२॥
ततोऽतिक्रुद्धो भगवान् पार्वतीप्राणवल्लभः। शरैर्विध्वंसयामास चन्द्रमुक्ताञ्छरांस्तदा ॥६३॥
आग्नेयास्त्रं प्रयुयुजे चन्द्रं हन्तुं महेश्वर। आग्नेयास्त्रं समालोक्य पर्जन्यं ससृजे विधुः ॥६४॥
आग्नेयास्त्रं समालोक्य शान्तं देवो महेश्वरः। रजनीशविनाशाय पर्वतास्त्रं समाददे ॥६५॥
पर्वतास्त्रं समायान्तं वीक्ष्य चन्द्रो महाबलः। पर्वतास्त्रविनाशाय वायव्यास्त्रं हि सन्दधे ॥६६॥
ततस्तु गिरिजानाथो विनाशाय कलानिधेः। नागास्त्रं सन्दधे घोरं ज्वालामालातिभीषणम् ॥६७॥
नागास्त्रमागतं वीक्ष्य लेलिहानमिवान्तकम्। क्षपाकरः क्षणादेव गरुडास्त्रं स सृष्टवान् ॥६८॥
ततो गौरीपतिः शीघ्रं रौद्रास्त्रेण कलानिधिम्। बबन्ध पश्यतां तत्र सासुरोरगरक्षसाम् ॥६९॥

मार्कण्डेय उवाच

विकलं विधुमालोक्य खड्गेन गिरिजापतिः। शिरश्छेत्तुं समारेभे हाहाकारो महानभूत् ॥७०॥

ब्रह्मोवाच

ततो निवारयामास सर्वलोकपितामहः। न हन्तव्यो न हन्तव्यो द्विजराजो महेश्वरः ॥७१॥

मार्कण्डेय उवाच

त्यज्यतां गिरिजानाथ कोपं शङ्कर शङ्कर। पितामहवचः श्रुत्वा निजगाद महेश्वरः ॥७२॥

महादेव उवाच

ददातु गुरवे तारां त्यज्यते रजनीकरः। नो चेन्निहन्मि रजनीनाथं दुष्टं तवाग्रतः ॥७३॥

ब्रह्मोवाच

इति शम्भुवचः श्रुत्वा ब्रह्मा प्रोवाच शङ्करम्। तारां दास्यति जीवाय मुच्यतामेष चन्द्रमाः ॥७४॥

मार्कण्डेय उवाच

ततो मुमोच भगवान् शङ्करो रजनीकरम्। चन्द्रमा लज्जितो भूत्वा तस्थौ शङ्करपाददृक् ॥७५॥

इति श्रीस्कन्दपुराणे हिमवत्खण्डे नेपालमाहात्म्ये त्रयोदशोऽध्यायः ॥१३॥

---

जैमिनिले भन्नुभयो – हे मुनिश्रेष्ठ तपोधन ! तपाईंको कमलसमान मुखबाट निस्केको प्रद्युम्नविजय सुनेर म तृप्त हुँदैन । हे तपोधन ! दुर्लभ नेपालक्षेत्रमा अरू जुन लिङ्गहरू छन्, तिनका बारेमा सुन्ने इच्छा उत्पन्न भएको छ, बताउनुहोस् ॥ १–२॥

मार्कण्डेयले भन्नुभयो – असल क्षेत्र नेपालमा अनेकौं लिङ्गहरू छन्। सोमलिङ्ग जस्तो लिङ्ग न भयो न हुनेछ। सत्य युगमा सोमेश्वर, त्रेतामा सोमनाथ, द्वापरमा सोमशम्भु र कलियुगमा सोमलिङ्ग त्यसको नाम युगयुगमा यसरी भन्छन्। हे द्विज ! हे मुनि ! सोमलिङ्ग गुप्त छ, सबै मानिसहरूले थाहा पाउँदैनन् ॥३–५॥

जैमिनिले भन्नुभयो – हे ब्रह्मन् ! सोमेश्वरको उत्पत्ति मेरा अगाडि भन्नुहोस्। हे ब्राह्मणहरूमा श्रेष्ठ ! त्यस सोमलिङ्गमा मेरो ठूलो श्रद्धा छ ॥६॥

मार्कण्डेयले भन्नुभयो – हे बाबु एकाग्र भएर सोमेश्वरको उत्पत्ति सुन्नुहोस् जुन सुन्नाले मात्रै मानिस पापबाट छुट्छ। हे मुनि पहिल्यै सत्य युगमा सबै विद्यामा विशारद औषधिहरूका स्वामी चन्द्रमा राजाहरूमा श्रेष्ठ भए। आफ्ना बाहुबलले तीनै लोकलाई वश गरे अनि एक दिन खूब बल भएका चन्द्रमाले गुरुलाई बोलाएर दरबारी चालले नम्र भई यो कुरा भने ॥७–९½॥

चन्द्रमाले भने – ब्राह्मणहरूमा श्रेष्ठ बृहस्पति ! मेरो कुरा सुन्नुहोस् – जसरी भए पनि राजसूय यज्ञ गर्न चाहन्छु। गुरुको भक्त तपाईंको शरणमा आएको मलाई यज्ञ गराउनुहोस् ॥१०–११½॥

बृहस्पतिले भने – राजसूय जस्तो यज्ञ अरू कुनै छैन, निश्चयै हो, हे विभु ! तपाईं राजसूय यज्ञ गर्नुहोस् ॥ राजसूयमा धेरै विघ्नहरू छन्, सबै पृथ्वी जित्नुपर्छ, कर्ताले दुःख पाउँछ, त्यसभन्दा पनि बढी याजकले दुःख पाउँछ। यसै कारणले हे कलानाथ ! राजसूय डर लाग्दो हुन्छ, त्यसैले तपाईं सर्वथा राजसूय यज्ञ नगर्नुहोस्। गुरुको बोली सुनेर आदरपूर्वक फेरि चन्द्रमाले भन्न लागे ॥१२–१५॥

चन्द्रमाले भने– हे गुरु ! मैले राजसूय यज्ञ अवश्य गर्नुपर्छ, हे नाथ ! तपाईं सहायक भएको मेरो गर्न नसकिने भन्ने नै के छ र ? हे जीव ! श्रमले तपाईं यो नछोड्नुहोस्, मलाई वर दिने हुनुहोस्। बृहस्पतिले चन्द्रमाको कुरा सुनेर बृहस्पतिले भन्न लागे ॥१६–१७॥

बृहस्पतिले भने – कलाका खानी चन्द्रमा !कल्याणदायक राजसूय यज्ञ गर्ने तपाईंको निश्चयै छ भने अवश्य तपाईंलाई यज्ञ गराउनेछु। सबै पृथ्वी जितेर अनेक रत्नहरू बटुल्नुहोस् ॥१८॥

मार्कण्डेयले भन्नुभयो – एउटै चन्द्रमाले खालि एउटै रथले र एउटै धनुले सबै पृथ्वी जिते र त्यसपछि सुमेरुको नजिक यज्ञशाला बनाई सरजाम ठीक पारे। जति यज्ञपात्रहरू हुन्, ती सुनका बनाए र सुमेरु जस्तै अन्नहरूको पर्वतै बनाए। अनेक थरीका सूपहरूको त नदी नै बनाइए। महका कुलाहरू दूधका कुला र घिउका कुला बनाइए। त्यस्तै दहीका कुलार तेलका कुलागरेर करोडौं बनाइए ॥१९–२३॥

विचित्र आसनहरू ओछ्याउने गलैंचाहरू पनि विछ्याइए। आफ्ना बाहुबलले विभिन्न देशबाट अपहरण गरिएका असंख्य कम्बलहरू पनि त्यस बेला चन्द्रमाले ल्याए। सुत्ने ठाउँ, पानभूमिहरू पनि विभिन्न रत्नहरूले बनाइए, अनि ती चन्द्रमालाई बृहस्पतिले दीक्षा गराए। यस्तो ठूलो विधि भएको यज्ञ सुरु भएपछि दम्पतीसहित महादेव आदि सबै देवताहरू आए। हाहा हूहू आदि गरिएका गन्धर्वहरू आए। अप्सराहरूले युक्त विद्याधरहरू आए। सातै द्वीपमा बस्ने सबै राजाहरू पनि

आए। विभिन्न देशमा बस्ने सबै मुनिहरू आए। वैदिक, तान्त्रिकहरू, काव्य र कोष जान्नेहरू, त्यस्तै वैद्यहरू र ज्योतिषीहरू सबै नै आए। गायक, नर्तक र वादक पनि आए अनि वेश्या र भिक्षुहरू पनि आए। दिइयोस् र खाइयोस् यस्तै ठूलो शब्द सुनियो ॥२४-३१॥

शास्त्रचर्चा, काव्यचर्चा, वेदचर्चा र पुराणहरूको चर्चा थियो, ती बाहेक अरू चर्चा नै छैन। आएकाहरूलाई चन्द्रमाले चाहेभन्दा बढी धन दिए, त्यसपछि कलानिधिले राजसूय पूजा गरे। त्यसपछि नक्षत्रहरूका स्वामीले अवभृथ सुरु गरे। अनेक मन्त्रहरूले मन्त्रणा गरिएका, चार वेदका मन्त्रहरूले पनि मन्त्रिएका, त्यस्तै मनोहर जय शब्दले र विभिन्न बाजाका शब्दहरूले मन्त्रिएका सुनका पूर्ण घडाहरूद्वारा चन्द्रमाले स्नान गरे। स्नानको अन्तमा गुरुकी राम्री पत्नी तारालाई देखेर पछि हुने अर्थगौरवले गर्दा कामदेवद्वारा पीडित भए। आँखालाई आनन्द गर्ने राम्रो चन्द्रमालाई देखेर धेरै कामवासना भएकी तारा पनि मोहित भइन्। हो, स्त्रीहरूमा सधैं चञ्चलता हुन्छ ॥३२-३७॥

मार्कण्डेयले भन्नुभयो – त्यसपछि गुरुकै अगाडि चन्द्रमाले ती तारालाई समाते। आफ्नै अगाडि समातिएकी रमणीलाई देखेर गुरुले भने ॥३८॥

बृहस्पतिले भने – हे रजनीनाथ ! राजसूय यज्ञ गरेर लाज पनि छोडेर देवता र ब्राह्मणका नजिकमा अझ गुरुपत्नी हरण गर्नमा कसरी तिमीलाई धर्मको डर भएन। गुरुले धर्मवाक्यहरूद्वारा रोकिएका भए पनि चन्द्रमा उत्तम हार पहिरिएकी ताराका साथ अन्तःपुरमा पसे। स्वर्गमा बस्नेहरूको बीचमा ठूलो हाहाकार भयो। तिनका साथ कामशास्त्रमा विशारद कलानाथले रमण गरे ॥३९-४१½॥

दुःखले पिरिएका बृहस्पतिले पनि इन्द्रलाई भने– हे देवेन्द्र ! तपाईं सबै देवतालाई नियममा लगाउने हुनुहुन्छ। अझ तपाईंकै अगाडि पुरोहित ब्राह्मणकी पत्नी चन्द्रले लुट्यो। यहाँको सामु मैले के भनूँ र ? लोकका गुरु ब्रह्माले र सबै प्राणीले नमस्कार गरिएका तपाईं स्वर्गको रक्षा गर्न इन्द्र बनाएर राखिएको हुनुहुन्छ। षष्ठांश कर उठाउने राजाले तिरो असूल गरिएका प्रजाको यदि रक्षा गर्दैन भने रौरव नरक जान्छ। छोरामा, भाइमा, मन्त्रीमा, दुःखीमा अथवा पोडेमा पनि बराबर न्याय गर्छ भने त्यस राजाले स्वर्ग पाउनेछ। प्रजाहरूलाई रक्षा गर्नाले राजा भनिएको हो। जुन राजा प्रजाहरूको मोहले रक्षामा लाग्दैन र मात्सर्यमा लाग्दछ, त्यस राजाको राज्य निश्चय नै खतम हुन्छ ॥४२-४८॥

मार्कण्डेयले भन्नुभयो – यस्ता अनेक किसिमका वाक्यद्वारा गुरुले बुझाइएका इन्द्र चन्द्रमाको पराक्रमको डरले गर्दा चूप रहे। चन्द्रको डरले गर्दा न सूर्य, न वरुण, न बलियाहरूमा पनि बलिया वायु, न कुवेर, न अग्नि नै उठे। चन्द्रमाको तेजले चकित भएका न देवताहरू, न गन्धर्वहरू, न यक्षहरू, न दैत्यहरू, न राजाहरू नै उठे। चन्द्रमाको पराक्रमले डराएका देवता, दैत्य र मानिसहरूलाई देखेर महादेव खडा हुनुभयो र भन्न लाग्नुभयो ॥४९-५२॥

महादेवले भन्नुभयो – देवताको यस सभालाई धिक्कार छ। देवताहरूको पराक्रमलाई पनि धिक्कार छ। सबै देवता तथा दानवराजहरूलाई पनि हेला गरेर विष्णुलाई र मलाई पनि अनादर गरेर दुष्ट बुद्धि भएको चन्द्रले राजसूय यज्ञ गरी ब्राह्मणकी पत्नी अझ त्यसमाथि पनि गुरुकी धर्मपत्नीलाई ज्यादै थोरै ज्ञान हुनाले हर्ने काम गरे। म पिनाक लिएर चन्द्रमासँग लडाईं गरी एकै छिनमा नै गुरुको आँसु पुछ्नेछु। शिवले यति भनेर दिव्य ठूलो धनु लिएर तीनै लोकलाई डढाउँला झैं क्रोध गरी गणसहित उठ्नुभयो। युद्धका लागि पिनाक हातमा लिनुभएका शिवजी आएको सुनेर चन्द्रमा रथ चढी भवनबाट निस्के। त्यसपछि पृथ्वी काँप्यो, सबै पहाडहरू हल्लिए, रुखो हावा चल्यो। हजारौं उल्काहरू खसे। दिशाहरू तिरमिराए र मेघले धेरै रगत बर्साए ॥५३-५९॥

स्वर्गवासीहरूमा ठूलो हाहाकार भयो। अनि चन्द्र र शङ्करको बीचमा लडाईं भयो। बाणको अन्धकारले ढाकिएको संसारै आकुल थियो। हे ब्राह्मण ! हेर्ने देवताहरूको अगाडि आफ्नो पराक्रम देखाउँदै शङ्करका साथ चन्द्रमा लडे। बलले मातिएकाले शङ्करलाई तीखा तीखा बाणहरूले ढाकिदिए। त्यसपछि खूब रिसाएनुभएका पार्वतीका प्राणपियारा भगवान्ले चन्द्रले छोडिएका शरलाई शरहरूले विध्वस्त पारिदिनुभयो। चन्द्रलाई मार्नका लागि महेश्वरले आग्नेयास्त्रको प्रयोग गर्नुभयो। आग्नेयास्त्र देखेर चन्द्रमाले पर्जन्यास्त्र हाने ॥६०-६४॥

देव महेश्वरले आग्नेयास्त्रलाई शान्त पारेको देखेर चन्द्रमालाई मार्नका निम्ति पर्वतास्त्र लिनुभयो। महाबली चन्द्रले पर्वतास्त्र आएको देखेर पर्वतास्त्रलाई नाश गर्नका निम्ति वायव्यास्त्र लिए। त्यसपछि शिवले चन्द्रमालाई मार्नका लागि ज्वालाहरूले ज्यादै डरलाग्दो भएको भयङ्कर नागास्त्र लिनुभयो। लपलपाउँदै आएको काल झैं नागास्त्र आएको देखेर ती चन्द्रमाले तुरुन्तै गरुडास्त्रको सिर्जना गरे। त्यसपछि तुरुन्तै शिवले हेरिरहेका असुर, नाग र राक्षसहरूको अगाडि चन्द्रमालाई रौद्रास्त्रले बाँध्नुभयो ॥६५-६९॥

मार्कण्डेयले भन्नुभयो – विकल चन्द्रमालाई देखेर शिवजीले खड्गद्वारा टाउको काट्न लाग्नुभयो अनि त्यहाँ ठूलो हाहाकार भयो ॥७०॥

पितामहले शिवलाई भन्नुभयो – सबै लोकका हे महेश्वर ! चन्द्रमालाई कदापि मार्न हुन्न। हे गिरिजानाथ ! छोड्नुहोस्, हे शङ्कर ! रीस खिच्नुहोस् ॥७१½॥

मार्कण्डेयले भन्नुभयो – पतामहको बोली सुनेर महेश्वरले भन्न लाग्नुभयो ॥७२॥

महेश्वरले भन्नुभयो– चन्द्रमाले बृहस्पतिलाई तारा फिर्ता देओस्, अनि मात्रै म उसलाई छोडिदिन्छु। हैन भने तपाईंका अगाडि दुष्ट चन्द्रमालाई मार्छु।

यस्तो शम्भुको कुरा सुनेर ब्रह्माजीले शम्भुलाई भन्न लाग्नुभयो – चन्द्रमाले तारा बृहस्पतिलाई दिनेछ। यसलाई छोडियोस् ॥७४॥

मार्कण्डेयले भन्नुभयो – त्यसपछि भगवान् शङ्करले चन्द्रमालाई छोड्नुभयो। चन्द्रमा लज्जित भएर शङ्करको पाउमा आँखा गाडेर बसे ॥७५॥

स्कन्दपुराणअन्तर्गत हिमवत्खण्डमा नेपालमाहात्म्यको तेह्रौँ अध्याय समाप्त भयो।

# अथ चतुर्दशोऽध्यायः

चन्द्रबृहस्पत्योर्विवादो नेपालस्थतीर्थमहिमा च

(चन्द्रमा र बृहस्पतिको विवाद र नेपालमा रहेका तीर्थहरूको महिमा)

मार्कण्डेय उवाच

ततः सुरसभा जाता सासुरोरगभूमिपा। महाविह्वलतां प्राप्ता यथा चित्रार्पिता सभा ॥१॥
तारां समानयामास चन्द्रमा हरभीतितः। युयुधे चन्द्रमा यावत् शङ्करेण महात्मना ॥२॥
तावत् प्रासूत तनयमौरसं हिमदीधितेः। ततः समागता तारा सपुत्रा चन्द्रगेहतः ॥३॥
तां वीक्ष्य विस्मितास्तस्थुर्देवताः सकलास्तदा। ततः प्रोवाच तां तारां सर्वलोकपितामहः ॥४॥
अयं कस्य सुतस्तारे गुरोश्चन्द्रस्य वा पुनः। श्रुत्वा ब्रह्मवचस्तारा नोवाच किल लज्जया ॥५॥
एककालं तदा चक्रुरट्टहासं सुरा मुहुः। देवानामट्टहासेन तारापुत्रो हि लज्जितः ॥६॥
भूत्वा जगाद जननीं देवानां पश्यतां तदा। मातस्तातं कथय मे नो चेत् प्राणाँस्त्यजाम्यहम् ॥७॥
हसन्ति देवताः सर्वा मां वीक्ष्य पुरतस्तव। ततः प्रोवाच सा तारा पुत्रमुच्चस्वरेण हि ॥८॥
क्षेत्रे गुरोश्चन्द्रमसो जातोऽसि तनय ध्रुवम्। प्राह वाक्यं विधिर्जीवं श्रुत्वा तारावचस्तदा ॥९॥
गृह्यतां सुभगा तारा पुत्रश्चन्द्राय दीयताम्। श्रुत्वा भगवतो वाक्यं जीवः प्राह पितामहम् ॥१०॥

जीव उवाच

ब्रह्मन् पुत्रो मदीयोऽयं न चन्द्रस्य कदाचन। दीयतां पुत्रसहिता तारा मह्यं पितामह ॥११॥

चन्द्रमा उवाच

ततो विधुर्जीववचः श्रुत्वा प्राह पितामहम्। पितामह मदीयोऽयं पुत्रो जीवस्य नैव हि ॥१२॥

ब्रह्मोवाच

विधोर्वचनमाकर्ण्य पुनः प्राह पितामहः। विवादो नैव कर्तव्यश्चन्द्रेण गुरुणाऽपि च ॥१३॥
पुत्रपृष्टा हि यत् तारा प्राह सत्यं तदेव हि। आहर्ता राजसूयस्य दुःखं प्राप्नोति निश्चितम् ॥१४॥
अतोऽत्र विधिना लब्धमायासाद्दुःखमेव च। बुधवद्भाषितं यस्माद्बालकेन सुराग्रतः ॥१५॥
अतोऽयं बुधनामास्तु ममाज्ञातो महेश्वर। ततो जग्राह स गुरुस्तारां कमललोचनाम् ॥१६॥
पुत्रं जग्राह स हिमगुरौरसं तनयं तदा। ततः प्राह सभामध्ये गिरिजाप्राणवल्लभः ॥१७॥
गुरुपत्नी हृता तेन विधुना दुष्टबुद्धिना। महापातकसंयुक्तः ऋतुभोगविवर्जितः ॥१८॥
यक्ष्मणा क्षीणतामेतु सर्वदेवबहिष्कृतः। इत्युक्त्वा प्रययौ शीघ्रं कैलाशं गिरिजापतिः ॥१९॥
स्वानि स्थानानि ते जग्मुः देवाः शक्रपुरोगमाः। भूपाश्च मुनयः सर्वे स्वस्वस्थानं प्रपेदिरे ॥२०॥
ततः परं शीतकरो महापातकसंयुतः। अभिभूतो यक्ष्मणा च लेभे शर्म न कुत्रचित् ॥२१॥
ततः शरीरशुद्ध्यर्थं तीर्थं बभ्राम चन्द्रमाः। प्राच्युदीचीपश्चिमासु यानि तीर्थानि जैमिने ॥२२॥

जातः पृथिव्यां कालेन ततो द्वीपपतिर्भवेत् ॥

अथ ध्वजारोपणफलम् –

प्रतिपद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि। निस्तुदन्त्याऽऽशु पापानि महापातकजान्यपि ॥

भविष्ये –

ध्वजश्वेतपताका च अथवा पञ्चरङ्गिकम्। किङ्किणीजालसंवीतं श्वेतपद्मोपशोभितम् ॥
दत्वा देव्यै महाबाहो शक्रलोके महीयते ॥

धेनुगोदानस्य –

यो गां पयस्विनीं दद्यात्तरुणीं शीलमण्डिताम्। भगवत्यै महावाहो सोऽश्वमेधफलं लभेदिति – मेरुतन्त्रे ॥
अथातः सम्प्रवक्ष्यामि वाग्वत्याश्च मन्त्रद्वयम्। वाग्बीजं प्रथमो मन्त्रो नारदोऽस्य मतो मुनिः ॥
छन्दोऽनुष्टुब् देवता तु वाग्वती परिकीर्त्तिता। बीजपूर्वैश्च षड्दीर्घैः षडङ्गविधिरीरितः ॥

ध्यानं यथा –

श्वेताम्बरां श्वेतवर्णां श्वेतगन्धानुलेपनाम्। सुधाकुम्भं च पद्मं च वीणां पुस्तकमेव च ॥
करैर्दधन्तीं मीनस्थां मुक्ताभरणभूषितामिति। मन्त्रान्तरं तत्रैव ॥ रमा त्रपा वाग्वीजानि वदेत् ॥
गङ्गायाः वाग्वत्याश्च मन्त्रः नमो ममेति च पदं धारणं च ततो धियम्।
वाचमद्भुतां प्रदेहि स्वाहास्तु तत्त्ववर्णकः ॥

चतुर्विंशाक्षरो मन्त्रः –

षष्टिधनुःसहस्राणां यानि रक्षति वाग्वतीम्। न तां पापी कृतघ्नो वा कदाचित्प्राप्नुयान्नरः ॥
शुचयः श्रद्धानाश्च सत्यसन्धाश्च ये नराः। वाग्वत्यां ते नरास्स्नान्ति लभन्ते चोत्तमां गतिमिति ॥

अथ वाग्वतीस्नानविधिः –

प्रातःकृत्यं समुत्तीर्य यथाविभवविस्तरैः। प्रसन्नमानसो भूत्वा तीर्थस्नानोत्सुको भवेत् ॥

स्कन्दपुराणे –

उपस्करं समादाय गृहात्प्रनिःसृतो बहिः। स्नातुं गच्छामि वाग्वत्यां धृत्वेति मनसा व्रजेत् ॥
आर्यातीर्थे जलाप्लावं कर्तुं गच्छामि सांप्रतम्। वाचोक्ता मनसा चिन्त्य गृहाद्बहिःप्रथि व्रजेत् ॥

वाग्वतीदर्शनमन्त्रस्तत्रैव –

ॐ नमस्ते वाग्वती देवि सर्वदुष्कृतनाशिनी। अद्य मे धूलितं पापं दर्शनात्ते चिरार्चितम् ॥
प्रणम्य गौरवात्तीर्थं शिखां बध्वा यथाविधिः। कुशोदकं समादाय सङ्कल्पेन हि वाक्यतः ॥
तिङ्सुबन्तयुतं वाक्यमात्मनो यदि युज्यते। मध्ये कामं च होतुं च तिथ्यादि वाक्यमुच्चरेत् ॥
अद्यामुष्मिन्यथा मासे यथापक्षे दिनेतिथौ। नक्षत्रे च यथायोगे ह्यस्मिन्तीर्थे ततः परम् ॥
वदेत्स्नानमहं कुर्वे साधारणमतं मुने ॥ इति स्कन्दवचनात्।

अथ सङ्कल्पवाक्यम् –

ॐ अद्यादि सर्व यज्ञफलप्राप्तिपूर्वक इन्द्रलोकपूजितत्वकामः इति। तत्र सर्वपर्वसु स्नानम्। सर्वपर्वसु यत्नेन स्नातव्यं धीमताऽनिशमिति स्कन्दपुराणवचनात् ॥

अथ तीर्थस्नानकाले पठनीयो मन्त्रः –

वरुणाय च देवाय अम्भसां पतये नमः। रुद्रात्मने जलेशाय रसानां पतये नमः ॥
पवित्रितं जगत्सर्वं जगदुद्धरणाय च। येन प्रतिष्ठितं तस्मै जीवनाय नमोनमः ॥
इति स्नातुः पठनीयो मन्त्रः।

स्कान्दे –

सरस्वतीं महादेवीं तीर्थे स्वान्तेन भावयेत्। नाभिकुण्डसमुद्भूतां शम्भोर्वक्त्राद्विनिःसृताम् ॥
मुक्तास्फटिकचूर्णाभां वालुस्खलितवाहिनीम्।
वाग्वतीं तां द्रवीभूतां सर्वलोकैः प्रसेविताम्। शुद्धस्फटिसंकाशां त्रिनेत्रां चारुहासिनीम् ॥
चतुर्भुजां महेशानीं मकराकारकुण्डलाम्। सम्पूर्णेन्दुमुखीं देवीं सर्वाभरणभूषिताम् ॥
दधानां सर्वशो हस्तैः पाशांकुशवराभयान् ॥ एवं सञ्चिन्त्य तीर्थे तामानाभि जलमाविशेत् ॥
मौनी द्विवस्त्रधृक् स्नायाद्विधिवच्छुभलक्षणः। एवं स्नात्वा सन्ध्यामुपास्य शिवं पूजयेत् ॥

स्कन्द उवाच

तीर्थं ध्यात्वा ततः स्नात्वा भस्मना लेपयेत्तनुम्। कृत्वा सन्ध्यां च रुद्राक्षी भक्त्या लिङ्गं प्रपूजयेदिति ॥

इति तीर्थरत्नदीपिकायां वाग्वतीतीर्थस्नानविधानम् ॥

अथावरणतीर्थानि मेरुतन्त्रोक्तानि –

भानुमत्या सङ्गमे क्रोशोदकं नाम सावित्रीतीर्थम् ।आदित्येश्वरो महादेवः पूज्यः ॥१॥

प्रभावत्याः सङ्गमे क्रोशोदकं नाम प्रमोदाख्यं तीर्थं रामेश्वरो महादेवः पूज्यः ॥२॥

विष्णुपद्यां कालीजलसङ्गमे क्रोशोदकं नाम चण्डीतीर्थम्, चण्डेश्वरो महादेवः पूज्यः ॥३॥

फल्गुमतीसङ्गमे क्रोशोदकं नामभैरवतीर्थम्,पितामहेश्वरो महादेवः पूज्यः ॥४॥

दोलागिरिपश्चिमे मणिमतीनद्यां क्रोशोदकं नाम भैरवतीर्थम्। तत्र मणिचूडेश्वरो देवः पूज्यः ॥

मणिमतीसङ्गमाऽधः रुद्रधाराक्रोशोदकं नाम पातालगङ्गातीर्थम्, तत्र कोटेश्वरो महोदेवः पूज्यः ॥

शङ्खमूलेति प्रसिद्धम् ॥ इत्यावरणतीर्थानि ॥

एतान्येव पूर्वोक्तानि क्रोशोदकाख्यानि तीर्थानि ॥ अत्र विनायकपूजा ॥

मोदः प्रमोदः सुमुखो दुर्मुखो गणनायकः। दण्डपाणिर्महातेजाः पूज्याश्चात्र विनायकाः ॥

॥ इति स्कन्दपुराणे ॥

योऽर्चयति भक्तितो लिङ्गं वालुकया सुनिर्मितम्। यावत्तद्वालुकासंख्या तावच्छिवपुरे वसेत् ॥ इति स्कान्दे ॥

अथ नियतदिनकर्तव्यतीर्थयात्राक्रमः –

शृणु सर्वं प्रवक्ष्यामि निष्पन्नं च फलं यतः। स्नातकानां च तीर्थेषु साधारणक्रमं मतम् ॥

अथ तीर्थफलानि

भाद्रशुक्लाष्टम्याम्–

सावित्रीतीर्थे भानुमतीसङ्गमे स्नाने पुराकृतपापरोगनिवृत्तिः, ब्रह्महत्याविमोचनं रुद्रलोकप्राप्तिफलम् ॥ स्कान्दे ॥

भानुमत्या जले स्नानं ब्रह्महत्यां व्यपोहति ॥ स्नातः स्मरनभोऽष्टम्यां गवांशतफलं लभेदिति वचनात् ॥

चैत्रशुक्लद्वादश्यां प्रमोदतीर्थे प्रभावतीसङ्गमे –

स्नानं गङ्गाद्वारे च यत्फलमुक्तं तावद्दशगुणफलमिति स्कान्दे ॥

विष्णुलोकप्राप्तिरितिभविष्ये ॥ विनशनं कुरुक्षेत्रम् ॥२॥

चैत्रशुक्लकृष्णत्रयोदश्यामुभयोर्जलसङ्गमे विष्णुपद्याम् –

चण्डिकातीर्थे स्नानं पूर्वकृतसर्वपातकविमोचनम् ॥

छिन्नकरस्यापि अङ्कुरोत्पत्तिसंसारकर्मभोगादुद्धरणफलम् ॥३॥

वुधयुतायां चैत्रद्वादश्यां फल्गुमतीसङ्गमे विष्णुपादुकातीर्थे स्नानं पापाद्विमुक्तिफलम्। तत्र पिण्डदाने त्रिसप्तकुलस्योद्धरणफलम् ॥४॥

फाल्गुणशुक्लाष्टम्यां मणिमत्यां भैरवतीर्थे स्नानं रुद्रलोकमहितत्वफलम् ॥ स्कान्दे ॥

मणिमत्यां महापुण्यां यत्र कुत्रापि पण्डितः ॥

संस्नाति विधिवद् भक्त्या शिवलोके महीयते ॥ इति ५ ॥

ईषे शुक्लमहाष्टम्यां वाग्वतीसङ्गमे रुद्रधारामहातीर्थे स्नानम् ॥

सहस्रजन्मजपापेभ्यः महापापाच्च विमुक्ती रुद्रलोकमहितत्वफलम् ॥

रुद्रधारामहातीर्थेवाग्वत्याः सङ्गमे द्विज ॥ सहस्रजन्मजैः पापैः मुच्यते चैकवत्सरात् ॥

ईषे शुक्लमहाष्टम्यां स्नायते यः सकृद्पीति ॥ स्कन्दपुराणे ॥

॥ इत्यावरणतीर्थफलम् ॥

अथ वाग्वत्यामष्टाशीतितीर्थपूजा

अष्टाशीतिषु तीर्थेषु सेतुभिन्नादिषुक्रमादिति वचनात्। अत्रकुङ्कुमजत्वादिरञ्जिताक्षतश्वेतपुष्पधान्यलाजासिन्दूरनारिकेलपूगीफलादिभिः सेतुभिन्नतीर्थाय नमः ॥१॥

एवं दुर्गातीर्थाय नमः ॥२॥ नमः सर्वत्र ॥ गोपालतीर्थाय ॥३॥ दामोदरतीर्थाय ॥४॥ गायत्रीतीर्थाय ॥५॥

सावित्रीतीर्थाय ॥६॥ विनायकतीर्थाय ॥७॥ भृगुपाततीर्थाय ॥८॥ प्रमोदतीर्थाय ॥९॥ चरणावरतीर्थाय ॥१०॥ शक्रतीर्थाय ॥११॥ पञ्चनदतीर्थाय॥१२॥ कालीतीर्थाय॥१३॥ धर्मराजतीर्थाय॥१४॥ मृत्युञ्जयतीर्थाय॥१५॥ ज्ञानतीर्थाय॥१६॥ शङ्खमूलतीर्थाय॥१७॥ पातालगङ्गातीर्थाय ॥१८॥ अमरावतीतीर्थाय ॥१९॥ विमलावतीतीर्थाय ॥२०॥ निर्मलावतीतीर्थाय ॥२१॥ वायुवतीतीर्थाय ॥२२॥ योगवतीतीर्थाय ॥२३॥ मणिमतीतीर्थाय ॥२४॥ तत्रभैरवाय ॥२५॥ प्रयागतीर्थाय २६॥ पीठिकातीर्थाय २७ ॥ त्रिविक्रमतीर्थाय २८ ॥ स्वर्णतीर्थाय २९॥ ब्रह्मतीर्थाय ॥३०॥ राजेश्वरीतीर्थाय ॥३१॥ विष्णुतीर्थाय ॥३२॥ जयमङ्गलातीर्थाय ॥३३॥ श्रीवत्सलातीर्थाय ॥३४॥ कौरवोदकतीर्थाय॥३५॥ सौभाग्यवतीर्थाय॥३६॥ कुबेरतीर्थाय॥३७॥ गौरीतीर्थाय ३८॥ मृगेश्वरतीर्थाय॥३९॥ खर्वरिकातीर्थाय॥४०॥ श्रीमदार्यातीर्थाय ॥४१॥ नारायणतीर्थाय ॥४२॥ पावनिकातीर्थाय ॥४३॥ अगस्त्यतीर्थाय ॥४४॥ नीलकण्ठतीर्थाय ॥४५॥ वासुकितीर्थाय॥४६॥ गोखुराख्यतीर्थाय॥४७॥ भृगुपत्तनतीर्थाय॥४८॥ देवतीर्थाय॥४९॥ विष्णुसहस्रतीर्थाय॥५०॥ रुद्रसहस्रतीर्थाय॥५१॥ सूर्यभागातीर्थाय ॥५२॥ चन्द्रभागातीर्थाय ॥५३॥ मनःकामनातीर्थाय ॥५४॥ जिह्वालेलितीर्थाय ॥५५॥ गौरीकुण्डतीर्थाय ॥५६॥ जलेश्वरतीर्थाय॥५७॥ पञ्चनदतीर्थाय॥५८॥ भैरवतीर्थाय॥५९॥ जलेश्वरतीर्थाय॥६०॥ गुह्येश्वरीतीर्थाय॥६१॥ गणेशतीर्थाय॥६२॥ पशुगणतीर्थाय ॥६३॥ श्लेष्मान्तकतीर्थाय ॥६४॥ ताम्रचूडतीर्थाय ॥६५॥ उत्तरवाहिनीतीर्थाय ॥६६॥ चैलगङ्गातीर्थाय ॥६७॥ हत्यामोचनतीर्थाय ॥६८॥ हिमवत्तीर्थाय ॥६९॥ कैलाशतीर्थाय ॥७०॥ ततोविष्णुपदतीर्थाय ॥७१॥ फल्गुतीर्थाय ॥७२॥ भृगुपाततीर्थाय ॥७३॥ चन्द्रतीर्थाय ॥७४॥ सूर्यतीर्थाय ॥७५॥ गोकर्णतीर्थाय ॥७६॥ गदाधरतीर्थाय ॥७७॥पितामहतीर्थाय ॥७८॥ नारदतोर्थाय ॥७९॥ सप्तर्षितीर्थाय ॥८०॥ कपोतगिरितीर्थाय ॥८१॥ कान्तिभैरव तीर्थाय ॥८२॥ भैरवकुण्डतीर्थाय ॥८३॥ सुन्दरीकातीर्थाय ॥८४॥ विमलाम्बुजले गौरीतीर्थाय ॥८५॥ कामधेनुतीर्थाय ॥८६॥अनन्ततीर्थाय ॥८७॥ अप्सरोगणतीर्थाय ॥८८॥ अगस्त्यतीर्थाय ॥८९॥ तदुपरि ब्रह्मसरस्वतीतीर्थाय नमः ॥९७॥

इति वाग्वतीजले विशेषतः पूजनम् ॥

स्नायन्तां त्रिदशम्भक्त्या प्राप्नुयुः सकलानि चेति स्कन्दपुराणवचनम्।

यन्त्रपूजानन्तरं मातृपूजोक्ता देवीपुराणे –

मातरः पूजनीयास्तु दृष्टादृष्टफलार्थिना। गन्धनैवेद्यधूपेन बलिमालाविभूषणैः ॥
तथा मातृगणं पूज्य देवं भैरवरूपिणम्। स्त्रीसयुक्तकन्यका विप्राः पूजनीयाश्च शक्तितः ॥

अथ पञ्चरात्रे –

ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णती स्मृताः। वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी मता।
अष्टमी स्यान्महालक्ष्मीः प्रोक्ता स्युर्विश्वमातरः। बलिदाने विशेषस्तु ॥

गोमयोऽपलिप्तभूभागेऽष्टदलकमलमालिख्य प्रदक्षिणाक्रमेण प्राच्याद्यष्टदलेषु एष सदीपः माषभक्तबलिः ॥ ॐ ब्राह्म्यै नमः ॥ एवं ॥ माहेश्वर्यै २ कौमार्यै ३ वैष्णव्यै ४ वाराह्यै ५ ऐन्द्र्यै ६ चामुण्डायै ७ महालक्ष्म्यै ८॥ एवम् इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तेभ्यः कृशारान्नबलिर्देयः। साङ्गाय सपरिवाराय सवाहनाय सायुधाय एष बलिर्नमः ॥ इति नवभ्योऽपि बलिर्नमः ॥ इति नवभ्योपि बलिः। ततोऽष्टभैरवेभ्यो माषभक्तबलिः, भैरवाः पूर्वोक्ताः। ततो जलचरेभ्योऽपि। यथा –

अगाधे जलप्रवाहाभिमुखकूर्मेभ्यो मोदकम्। मकरेभ्यश्चणकान्। मत्स्येभ्यो लाजान्। मत्स्यदुन्दुभेभ्यो घृतसक्तून्। कुलीरेभ्यो कदलीफलान्। मण्डूकेभ्यो दधितण्डुलान् शिशुमारेभ्यः पूरिकान्। एष बलिर्नम इति क्रमेण दद्यात्। इति बलिविधिः ॥

कुमारीपूजायाम् – कुशादिकमादाय अद्येहामुकगोत्रोऽमुकशर्माहं देवीप्रसाद विविधमनोऽभीष्टकामावाप्तिभोगान्तरं देवीलोकगमनकाम एतास्तिस्रः कुमारीरहं भोजयिष्ये। इति सङ्कल्प्य ॥ कुमारीणां च चरणक्षालनं विधाय गोमयोपलिप्तभूभागे रम्ये शुभासनेषु तिस्रो ब्राह्मणकुमारीः प्राङ्मुखीरुपवेश्य। वाग्वती १ शिवगङ्गा २ ब्रह्मसरस्वती ३ च प्रविभाव्य। अर्घ्यमनोज्ञगन्धपुष्पमाल्यवासोविभूषणैः परिवाय सविधि समभ्यर्च्य खण्डमोदकगुणघृतदधिदुग्धमधुप्रभृतिमनोज्ञाहारैः शनैः शनैर्यथासुखं भोजयेत् ॥ अपेक्षितं चान्नपानादिकं दद्यात्। ततस्तासामाचान्तानां करेषु पुष्पाक्षतं दत्वा क्षमध्वमिति सम्प्रार्थ्य। ताभ्योऽक्षतान् शिरसा प्रतिगृह्य प्रणिपत्य विसर्जयेत्। एवं ब्राह्मणान् विविध भक्ष्यभोज्यदक्षिणादानेन प्रमदाजनान् भक्ष्यभोज्यचोलकादिदानेन तोषयेत् ॥ अन्याश्चान्नेन तोषयेत्।

स्कन्दपुराणे –

ईश्वर उवाच

हिमाद्रितुङ्गशृङ्गाद्यात्तन्मुखप्रभवा नदी। वाग्वती शिवगङ्गार्या तथाब्रह्मसरस्वती।
गङ्गाशतगुणं ज्येष्ठा पवित्रं सलिलं भवेत् ॥

वराहपुराणेऽपि -

वाग्वतीसलिले स्नातो विष्णुभवपुरं व्रजेदिति ॥ - इति स्कान्दे ॥

वाग्वती जलसंस्नाता महापातकिऽनोपि वा ॥ त्यक्त्वा देहं नरा यान्ति मम लोकं न संशयः ॥

स्रवतीनां वरापुण्या वाग्वती मन्मुखोद्भवा। पञ्चसहस्रवर्षान्ते सा हि गङ्गा भविष्यति ॥ - इति मेरुतन्त्रे ॥

अयुताब्दैः कलेयति त्यजेद्विष्णुशिला महीम्। तदर्द्धे जाह्नवी तोयं तदर्द्धे देवताशिला ॥

जप एव कलौ श्रेयान् शालिग्रामार्चनं तथेति च ॥

इति तीर्थरत्नदीपिकायां नारायणदीक्षितविरचितायां यन्त्रपूजाविधानं नाम दशमः प्रकाशः ॥१०॥

अथ तीर्थान्तरम् -

वराहपुराणे -

वाग्वत्या मणिमत्याश्च सम्भेदे पापनाशने। अहोरात्रं वसेद्यस्तु रुद्रजापी द्विजः शुचिः ॥

स भवेद् विदुषां श्रेष्ठो यद्वा पार्थिवपूजितः। तारितं च कुलं तेन सर्वं भवति चाधुना।

वर्णावरतीर्थे तिलोदकं दत्वा पितरस्तर्पिता भवन्ति ॥ मणिमत्याश्च सङ्गमे तार्क्ष्यतीर्थम् । तत्र स्नानान्नागभयात्प्रमुक्तिफलम् । मणितीर्थे स्नात्वा दोलाद्रिमारुह्य गरुडध्वजस्य दर्शनं सर्वपापपान्निर्मुक्तिर्वैष्णवपदगमनफलम् ॥ योगगङ्गासङ्गमे पातालतीर्थे स्नात्वा वज्राख्याया योगिन्या दर्शनं योगाम्बरत्वप्राप्तिफलम् । यत्र कुत्रापि मणिमत्यां स्नानं शिवलोकगमनफलम् । नारीणां पुत्रप्राप्तिफलम् ॥ रुद्रचूडामणितीर्थे मेषस्थेर्केऽष्टम्यां स्नानं गोसहस्रफलं प्राप्य रुद्रलोकगमनफलम् ॥ श्रावणीपूर्णिमायां सकृदपि स्नानमेतदेव फलम् ॥

स्कान्दे - रुद्रचूडामणौ तीर्थे स्नातकानां महत्फलम्। भूत्वा तदङ्गिनी श्रेष्ठा प्रववाहाद्रिशेखरात् ॥इति॥

नित्यं विराजते गङ्गा रुद्रमौलिसमुद्भवा ॥ प्रत्यग्रं स्नानफलम् ॥

श्रीगणेशाय नमः, अथ क्षेत्रप्रदक्षिणक्रमः -

अथ क्षेत्रप्रदक्षिणक्रमो भैरवतन्त्रतीर्थरत्नदीपिकानुसारेण

अवतारैरनेकैश्च युतं विष्णो शिवस्य च ॥ माहेश्वरीशक्तिव्युष्टं क्षेत्रं कुर्यात्प्रदक्षिणम् ॥इत्यादि ॥

तथा कुम्भज वक्ष्यामि क्षेत्रं महत्फलप्रदम् ॥

देवैः प्रकाङ्क्षिते नित्यं भुक्तिमुक्तीप्सितप्रदम् ॥ नित्यं विराजते लिङ्गैस्तत्क्षेत्रमष्टमूर्त्तिभिः ॥

यन्त्रं विनायकोऽत्र क्षेत्रपालस्तथापरः ॥ तस्य प्रदक्षिणा पुंसां सप्तजन्माघनाशनीति ॥ तत्र प्रथमं गणेशक्षेत्रं गत्वा वाग्वत्याम्। स्नात्वा गणेशं सम्पूज्य बद्धाञ्जलिः प्रार्थयेत् -

वक्रतुण्डमहाकाय कोटिसूर्यसमप्रभः ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥१॥

गजानन नमस्तेस्तु सर्वविघ्ननिवारक ॥ क्षेत्रप्रदक्षिणां कर्त्तुमागतोस्मि धरामिमाम् ॥२॥

इति सम्प्रार्थ्य प्रणम्य पश्चिमद्वारं चन्दनाद्रिनिकटकदेशम् उत्तमोत्तमक्षेत्रं गत्वा नवलिङ्गजले स्नात्वा एतज्जन्मनि कृतं पापं भस्मीभूतं विचिन्त्य जन्मान्तरार्जितपापापनुत्तये क्षेत्रप्रदक्षिणासंङ्कल्पं कुर्यात् ॥ अद्येत्यादि मासपक्षाद्युल्लिख्य मम जन्मजन्मोपार्जितसमस्तपापक्षयाय मृत्युचयनिवृत्तिचिरजीवित्वं संसारकर्मभोगादुद्धाररुद्रलोकमहीतत्वकामः पाशुपतक्षेत्रप्रदक्षिणां करिष्ये ॥ इति सङ्कल्प्य, चन्दनभराटेश्वरं सम्पूज्य नवलिङ्गं नत्वा पद्मतीर्थाय नमः, सत्यनारायणाय नमः। मातृतीर्थाय नमः। इति नत्वा गोखुरेश्वराय पाण्डुकेश्वराय नमः। बाणेश्वराय नमः। गोलोकेश्वराय नमः। भस्मेश्वराय नमः। भुवनेश्वराय नमः। ज्ञानेश्वराय नमः। चन्दनभराटेश्वराय नमः। नमः सर्वत्र ॥ इत्यक्षतान् दत्वा भैरवाय माषभक्तबलिं दद्यात् ॥ उन्मत्तवाराहीभ्यां एष बलिर्नमः, इति भैरवबलिं दत्वा सङ्कल्पः ॥

अद्यानेकजन्मार्जितसमस्तपापक्षयहेतुकसंसृतिकर्मभोगोद्धरणवायुलोकमहीतत्वकामः कामदक्षेत्रप्रदक्षिणां करिष्ये इति सङ्कल्प्य अञ्जलिं बध्वा प्रार्थयेत् -

चतुर्विंशतिक्रोशस्य यात्रां कुर्वे यथाविधि ॥ प्रीत्यर्थं तव देवेश सर्वाघौघप्रशान्तये ॥ इति विज्ञाप्य गच्छेत् ॥

वायव्यद्वारदेशं वायुतीर्थं गत्वा कालकुण्डं स्नात्वा कामेश्वरमहादेवं पूजयित्वा सितेश्वराय भैरवेश्वराय यक्षेश्वराय पर्वतेश्वराय त्रिकूटेश्वराय रुद्रागारेश्वराय शैलेश्वराय स्कन्देश्वराय नमः ॥ इत्यक्षतं दत्वा ॥३४॥ कामेश्वरमहादेवक्षेत्रवासिजनप्रिय ॥ क्षेत्रप्रदक्षिणां कुर्वे कर्मदोषं विनाशय ॥३४॥ क्रोधवैष्णवीभ्यामेष बलिर्नमः ॥ इति बलिं दत्वा तत्रैव वासः ॥१॥

प्रातः स्नात्वा सङ्कल्प्य । अद्य षड्वर्गकृतपापक्षयविमुक्तिविकिल्विषत्वदेहान्तक

संसारकर्मयोगादुद्धरणरुद्रलोकमहीतत्वकामो धर्मक्षेत्रप्रदक्षिणां करिष्ये इति सङ्कल्प्य ३४ देवस्तुतिं पठित्वा गच्छेत् ॥ ततः – श्रीचण्डेश्वरधर्मेण पूजितस्त्वं सनातनः ॥ त्वद्दर्शनान्महादेव धर्मबुद्धिर्ममास्तु च ॥

इति चण्डेश्वरं प्रणम्य उत्तरद्वारदेशं धर्मक्षेत्रं गत्वा वाराहीसङ्गमे विष्णुपदीतीर्थे स्नात्वा कूटेश्वरमहादेवं सम्पूज्य ब्रह्मेश्वराय नमः चण्डेश्वराय नमः चण्डेश्वराय काकेश्वराय मणिचूण्डेश्वराय धर्मेश्वराय जलेश्वराय गुह्येश्वराय शतरुद्रेश्वराय नमः ॥ इत्यक्षतान् दत्वा चण्डकौमारीभ्यामेष बलिर्नमः ॥ इति बलिं दत्वा तत्रैव वासः ॥२॥ प्रातः स्नात्वा अद्येत्यादि सर्वपापविमुक्त्युत्तरयोगसिद्धिफलकामः योगक्षेत्रप्रदक्षिणां करिष्ये इति सङ्कल्पः ॥

कूटेश्वर महादेव पितृमुक्तिप्रदायक ॥ आज्ञां देहि करिष्यामि योगक्षेत्रप्रदक्षिणाम् ॥ इति पठित्वा आकाशगङ्गां कावेरीं च नत्वा ईशानद्वारं योगक्षेत्रं गत्वा योगतीर्थे स्नात्वा ज्योतीरीश्वरं वज्राख्यां योगिनीं सिद्धर्षिञ्च पूजयित्वा स्फटिकेश्वराय रत्नचूडेश्वराय नारायणेश्वराय ज्योतिर्लिङ्गेश्वराय वागीश्वराय वाल्मीकेश्वराय गोकर्णेश्वराय योगेश्वराय नमः ॥ इत्यक्षतान् दत्वा रुरुमाहेश्वरीभ्यामेषबलिर्नमः ॥ इति दत्वा बलिं तत्रैव वासः ॥३॥ प्रातः स्नात्वा सङ्कल्पः ॥ अद्येत्यादिब्रह्मलोक गमनान्तरब्रह्मज्ञानफलप्राप्तिकामः । उत्तमोत्तमहरिहरक्षेत्रप्रदक्षिणां करिष्ये इति सङ्कल्प्य,

योगेश्वर महेशान योगरूपधराव्यय ॥ क्षेत्रप्रदक्षिणां कर्तुर्योगसिद्धिं प्रयच्छ मे ॥

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुर्महसि ॥ इति भैरवं क्षमाप्य गच्छेत् ॥ तत्र विष्णवे नमः ॥ इति जपन् प्रजप्य तन्मन्त्रं लक्षं परिक्रमन्ननालसः ॥ अलीलयन्ततो विष्णोर्विप्रोज्योर्तिमयोऽपरः ॥॥ इति वचनात् ॥

पूर्वद्वारदेशं ज्ञानदक्षेत्रं गत्वा पुष्पवतीजले स्नात्वा विकटेश्वरं सम्पूज्य कुशेश्वराय भीमेश्वराय काफीश्वराय कश्यपेश्वराय चण्डिकेश्वराय चण्डिकायै धनेश्वराय कीलेश्वराय विकटेश्वराय नमः । इत्यक्षतां दत्वा असिताङ्गब्राह्मीभ्यामेष बलिर्नमः । इति बलिं दत्वा तत्रैव वासः ॥४॥ प्रातः स्नात्वा अद्येत्यादिपूर्वजन्मार्जितपापक्षययोगसहस्रदानफलप्राप्तिकाम ऋषिपाम्पर्यक्षेत्रप्रदक्षिणां करिष्ये ॥ इति सङ्कल्प्य,

षडक्षरस्वरूपात्मन् विकटेश महेश्वर । ज्ञानात्मन्सवभूतात्मन् ज्ञानसिद्धिं प्रयच्छ मे ॥ इति नत्वा आग्नेयद्वारं ऋषितीर्थाख्यं ऋषिपाम्पर्यक्षेत्रं गत्वा तत्र स्नात्वा त्र्यम्बकेश्वराय सम्पूज्य इन्द्रेश्वराय विमलेश्वराय मङ्गलेश्वराय अनन्तेश्वराय विश्वरूपेश्वराय सोमेश्वराय गोभराटेश्वराय भालेश्वराय नमः इत्यक्षतान् दत्वा ॥ संहारमहालक्ष्मीभ्यामेषबलिर्नमः इति बलिं दत्वा तत्रैव वासः ॥५॥ प्रातः स्नात्वा सङ्कल्पः ॥ अद्यगोकोटिदानफलकवित्वप्राप्तिकामः सारस्वतोत्तमक्षेत्रप्रदक्षिणां करिष्ये ॥

त्वमेव स्रष्टा पाता च संहर्त्ता च त्वमेव हि । त्वमेव शरणं नाथ त्राहि मां त्र्यम्बकेश्वर ॥

गोदावर्याख्ये महातीर्थे स्नात्वा नवधाराजले मार्जनं कृत्वा महालक्ष्मीं प्रणम्य दक्षिणद्वारं सारस्वतक्षेत्रं गत्वा मनःश्रीतीर्थे स्नात्वा तिलेश्वरलिङ्गं दक्षिणामूर्तिसंज्ञितं सम्पूज्य सरस्वतीं च पूजयित्वा तत्कुण्डलजलं दक्षिणहस्तपुटेन पीत्वा गुप्तेश्वराय चम्पकेश्वराय रामेश्वराय कालेश्वराय नटारम्भेश्वराय भृङ्गेश्वराय कोटेश्वराय तिलेश्वराय नमः ॥ इत्यक्षतान् दत्वा ॥ भीषणचामुण्डाभ्यामेषबलिर्नमः ॥ इति बलिं दत्वा तत्रैव वासः ॥ रात्रौ जागरणं पुराणकथाश्रवणम् ॥७॥ प्रातः स्नात्वा सङ्कल्पः ॥ अद्यसर्वदानसर्वयज्ञफलप्राप्तिपूर्वकदेहान्ते स्वर्गलोकप्राप्तिकामो भैरवक्षेत्रप्रदक्षिणां करिष्ये ॥ इति सङ्कल्प्य –

वटमूले समासीनो दक्षिणामूर्त्तिरव्ययः ॥ सदा मां सर्वदा पातु सर्वसंपत्प्रदायकः ॥ इति तिलेश्वरं विज्ञाप्य रामेश्वरं क्षेत्रभैरवं च नत्वा नैर्ऋत्यद्वारं विष्णुतीर्थं गत्वा दामोदरतीर्थे स्नात्वा गोपालेश्वरं सम्पूज्य उद्दालकेश्वराय चम्पेश्वराय उम्मत्तेश्वराय नन्दिकेश्वराय त्रिलिङ्गेश्वराय कुपितेश्वराय सर्वेश्वराय गोपालेश्वराय नमः ॥ इत्यक्षतान् दत्वा ॥ कपालीद्रोणीभ्यामेषबलिर्नमः । इति भैरवबलिं दत्वा ॥ गोपालनारायणं कामधेनुं च नत्वा तत्रैव वासः ॥८॥ रात्रौ जागरणं पुराणश्रवणम् ॥ इतयष्टौ लिङ्गानि ॥ प्रातः स्नात्वा मुक्तिक्षेत्रप्रदक्षिणां सङ्कल्पं कृत्वा मीनतीर्थं गच्छेत् ॥ तत्र वाक्यम् ॥ सर्वदानोद्भवमनसेप्सितफलभोगोत्तरगोलोकवासकामो मुक्तिक्षेत्रप्रदक्षिणां करिष्ये ॥ इति प्रणमेत् ॥ ततोगायत्रीतीर्थं गत्वा दक्षेश्वरं नत्वा मत्स्यतीर्थं गत्वा मत्स्येश्वरं पूजयित्वा तत्रैव वासः ॥९॥ प्रातः स्नात्वा (क्षेत्रस्य पश्चिमद्वाराग्रं गत्वा टेटकर्णक्षेत्रपालाय माषभक्तबलिं दद्यात् ॥ ततोऽष्टप्रदक्षिणां नमस्कारांश्चाष्टौ कृत्वा पुष्पाञ्जलिं दत्वा प्रार्थयेत् जयलोकेश.) ऐन्द्रीपुरपीठं गत्वा सङ्गमस्नानं कृत्वा गोलोकेश्वरपूजनम् ॥ तद्यथा ॥ शतरुद्रीयमन्त्रैः पञ्चामृतेन देवस्नपनं कारयित्वा पीठपूजां कुर्यादितिदीपिकायाम् ॥ अत्र महापीठपूजोक्ता भैरवतन्त्रे ॥

अथावातरपीठपूजा –

ईशानादिवज्रपीठाय चण्डीपीठाय महाभैरवीपीठाय सारस्वतपीठाय कामधेनुपीठाय उमापीठाय कामेश्वरीपीठाय सुन्दरीपीठाय नमः सर्वत्र ॥ इति पीठपूजा ॥ ततोष्टदिक्षु ॥ उत्तरादि ॥ उमायै चण्डेश्वराय नन्दिने महाकालाय गणाधिपाय वृषभाय भृङ्गविकटाय कार्तिकेयाय नमः सर्वत्र ॥ इति पीठरक्षणदेवता ॥

अथमहादेवपूजा षोडशोपचारैः ॥१६॥ आसनं भवाय स्वागतं सर्वाय पाद्यं रुद्राय इदमर्घ्यं पशुपतये । आचमनीयम् उग्राय, मधुपर्कमहातपाय आचमनम् भीमाय, स्नानीयम् ईशानाय ॥ पुनरप्यष्टनामभिः । वस्त्रं भवाय आभरणं

सर्वाय सुगन्धिद्रव्यं रुद्राय पुष्पाणि पशुपतये ॥ एष धूप उग्राय देवाय। एष दीपो महातपाय। इदं नैवेद्यं भीमाय। श्रीखण्डचन्दनम् ईशानाय। नमः सर्वत्र ॥१६॥ ततोष्टप्रदक्षिणनमस्कारांश्चाष्टौकुर्यात्। ततश्चरादेश्वरं सम्पूज्य निर्माल्यं च दत्वा दिग्देवता - पूजां कुर्यात्॥ पूर्वद्वारे उन्मत्तभैरवाय एष बलिर्नमः। इति बलिः॥ एवम् आग्नेयद्वारे असिताङ्गभैरवाय बलिश्च॥एवं रुरुभैरवाय॥ संहारकभैरवाय क्रोधभैरवाय आनन्दभैरवाय चण्डभैरवाय। नमः सर्वत्र ॥ बलिः सर्वत्र ॥ एवं ॥ इन्द्रादिदिग्पालान्सम्पूज्य बलिश्च॥ एवं सूर्यादिनवग्रहान्॥ ग्रहेभ्यो बलिश्च ततो भवाद्यष्टनाभिरष्टाहुतिहोमः॥ टेटकर्णक्षेत्रपालाय एष समाषबलिर्नमः। इति बलिदानं च॥

होमाशक्तौतत्रत्याम्नायीभूतंगोदानंवाकार्यम्॥तत्रगोदानवाक्यम्॥अद्येत्यादिममसमस्तपापक्षयपूर्वकम्एतत्पाशुपतक्षेत्रे अयाज्ययाजनाऽवध्यवधागम्यागमननित्यकर्मकालातिक्रमणमिथ्यावादमलिनीकरणादिदोषपरिहरणार्थम्कृतस्यबृहत्क्षेत्रस्यप्रदक्षिणाकर्मणो यथोक्तफलावाप्तये इमां गां रुद्रदैवतकां तत्रत्याम्नायीभूतम्, अमुकदैवतं अमुकगोत्रायेत्याल्पः॥ अद्य बहुपापाऽलिप्तत्कामो भगवत्याः शिवमूर्त्याः शिरसाप्रणाममहंकरिष्येअन्यच्च॥अद्यसर्वयज्ञसर्वोपवासजन्यफलसतीर्थजन्यफलसमफलप्राप्तिकामनया शिवमूर्तिं शिरसा प्रणाममहं करिष्ये इति सङ्कल्प्य दानप्रतिष्ठार्थं दक्षिणा च॥ ततो ब्राह्मणभोजनम्॥ हिरण्यदानम्॥ वस्त्रदानम्॥

इति तीर्थरत्नदीपिकानुसारिणी पाशुपतक्षेत्रेबृहत्क्षेत्रप्रदक्षिणापद्धतिः॥ शाके १७७५ श्रावणमासे १० रोज दोलगिरिपर्वते लिखितमिदं शुभम्।

अथ मूलक्षेत्रप्रदक्षिणाक्रमः

(यस शीर्षकमा पशुपति मन्दिरका वरिपरिका एक योजनसम्मका भूभागलाई मूलक्षेत्र भनिएको छ। मूलक्षेत्रको प्रदक्षिणा गर्ने क्रमबारे चर्चा गरिएको छ।)

॥ श्रीगणेशाय नमः॥

वराहपुराणे स्कान्दे च -

योजनाभ्यन्तरं क्षेत्रं समन्तात्सर्वतोदिशम्। मूलक्षेत्रं तु विज्ञेयं रुद्रेणाधिष्ठितं स्वयम्॥
मध्ये पशुपतिर्देवो ज्योतिर्लिङ्गो विराजते। नित्यं विराजते लिङ्गैस्तत्क्षेत्रमष्टमूर्त्तिभिः॥
अथाष्टमूर्त्तयः। भैरवतन्त्रे॥ सर्वाय क्षितिरूपाय भवाय जलमूर्तये।
रुद्राय वह्निरूपाय उग्राय वायुमूर्तये॥ भीमायाकाशरूपाय पशूनांपतये नमः॥
यजमानस्वरूपाय वामनाय ततो यजेत्। महादेवाय सोमाय ईशानायार्कमूर्तये॥
मन्त्रैरष्टभिरेतैश्च द्विरावृत्या विचक्षणः। वक्रतुण्डमेकदन्तं महोदरगजाननौ॥
लम्बोदराख्यं विकटं विघ्नराजमनन्तरम्। धूम्रवर्णं तथा क्षेत्रे पूर्वादिक्रमतो यजेत्॥
माहेश्वरीशक्तिजुष्टं क्षेत्रं कुर्यात्प्रदक्षिणाम्। तस्य प्रदक्षिणा चास्य कोटिजन्माघनाशिनीति॥
अथ क्रमः पूर्वकोणे मणितीर्थे स्नात्वा वक्रतुण्डाय गणेश्वराय नमः।सर्वाय क्षितिमूर्तये नमः॥ इति सम्पूज्य॥
विघ्नेश्वर प्रचण्डानि मम विघ्नानि नाशय। क्षेत्रप्रदक्षिणां कर्तुं गमिष्यामि नमोऽस्तु ते॥

अथ मूर्तिस्तुतिः

सूक्ष्माय समसूक्ष्माय सूक्ष्मातीताय सङ्गिने। स्थूलाय स्थूलमात्राय स्थूलातीताय वै नमः॥
इति पृथिवीमूर्तिकीलेश्वरस्य स्तुतिः, ६ अत्र पूर्वद्वारदेशं गत्वा वरदयोगिनीपूजा कार्या स्तुतिश्च।
मातर्देवि नमस्तुभ्यं ॥१॥ परापरममात्रायै ॥२॥ सृष्टिस्थितिविनाशानां हेतुभूतिनी ॥३॥ स्तुत्वेव योगिनी वज्रा एवं सर्वत्रज्ञेयम्॥ इति सम्प्रार्थ्य मङ्गलेश्वरं नत्वा गच्छेत्॥१॥
सोमतीर्थे स्नात्वा एकदन्तगणेशाय नमः। भवाय जलमूर्तये नमः॥ इति सम्पूज्य नमो भवाय भव्याय भूतानां पतये नमः। भूतात्मने विभूताय भूतोद्भूताय भूतिने॥ इति प्रणम्य गच्छेत्॥२॥
सिद्धसरोवरतीर्थेस्नात्वा महोदरगणेशाय नमः॥ रुद्रायाग्निमूर्तये नमः॥ इति सम्पूज्य,
नमो ज्योतिःस्वरूपाय ज्योतिषां पतये नमः। तेजःपुञ्जाय रुद्राय अमलाय नमो नमः॥ इति प्रणम्य गच्छेत्॥३॥
भृगुपाततीर्थे स्नात्वा गजाननगणेशाय नमः उग्राय वायुमूर्तये नमः॥ इति सम्पूज्य,
नमो वायुशरीराय पञ्चाङ्गाय नमो नमः। वामदेवाय विश्वाय व्योमरूपाय ते नमः॥ इति प्रणम्य गच्छेत्॥४॥
रुद्रतीर्थे स्नात्वा लम्बोदरगणेशाय नमः। भीमायाकाशमूर्तये नमः॥ इति सम्पूज्य॥
नमोस्तु व्योमकेशाय तारकाय नमो नमः। नम आनन्दरूपाय परमात्मपरात्मने। इति प्रणम्य गच्छेत्॥५॥
पक्षे तीर्थे स्नात्वा विकटगणेशाय नमः। वामनाय यजमानमूर्तये नमः॥ इति सम्पूज्य॥

नमो योग्याय यज्ञाय यज्ञरूपाय योगिने। योगेश्वराय योगाय योगाचार्याय नमो नमः ॥ इति प्रणम्य गच्छेत्।
पिण्डारकतीर्थे स्नात्वा विघ्नराजगणेशाय नमः ॥ महादेवाय सोममूर्तये नमः ॥
नमः पराय पाराय परमाय परात्मने। परापरप्रतीताय परात्परमयायिने ॥
नमः सदसदङ्गाय हंसरूपाय वै नमः। संसारसाररूपाय सदसते नमो नमः ॥ इति प्रणम्य गच्छेत् ॥
बलाकेश्वर इति प्रसिद्धः धर्मेश्वरो देवः ॥७॥
सहस्रधारातीर्थे स्नात्वा धूम्रवर्णविनायकाय नमः ॥ ईशानाय सूर्यमूर्तये नमः इति ॥ सम्पूज्य,
नमोस्तु जलरूपाय क्षितिरूपाय वै नमः ॥
अग्नये व्योमरूपाय सूर्यायान्जाय चात्मने ॥ इति प्रणमेत् ॥८॥ इति अष्टौमूर्तयः ॥

गणेशायाष्टद्रव्यसमर्पणम् –

अथाष्टद्रव्याणि। प्रथमे नारिकेलं १ द्वितीये तिलाः २ तृतीये कदलीफलं ३ चतुर्थे मोदकं ४ पञ्चमे लाजाः ५ षष्ठे सक्तवः ६ सप्तमे गुडभक्तं ७ अष्टमे इक्षुपर्व ८ क्रमेण समर्पणम् ॥
अपक्रान्तो यतः स्थानात्तस्मिन् स्थाने समापनम् ॥

ततः क्षेत्राभ्यन्तरं प्रविश्य गुह्यकालीपीठं गत्वा क्षेत्राधिष्ठितदेवतापूजनम् ॥ तत्र ईशानादिक्रमः ॥ वासुकिनागराजाय नमः ॥ श्लेष्मान्तकायै वाग्वत्यै नमः ॥ ज्योतिर्लिङ्गेश्वराय स्कन्दाय विघ्नराजाय वत्सलादेव्यै जयमङ्गलायै राजराजेश्वरीदेव्यै आकाशभैरवाय क्षेत्रपालाय चतुष्षष्टियोगिनीभ्यः द्वादशादित्येभ्यः ॥ नन्दिने भृङ्गिरिटिये लम्बोदराय लाहेश्वर्यै अष्टमातृकाभ्यः ॥ पुरुहूताय त्रिपादेश्वराय नमः चण्डेश्वराय नमः निर्माल्यं चरुन्द्यात् ॥ स्कान्दे ॥ एताः प्रयत्नेन सम्पूज्याः क्षेत्ररक्षणदेवताः ॥

तथैव नमस्कारान्कृत्वा पुष्पाञ्जलि च दत्वा दण्डवत्प्रणतो भूत्वा,
जयलोकेश विश्वात्मन् क्षेत्रनाथजगत्पते ॥ त्वप्रसादान्महादेव कृता क्षेत्रप्रदक्षिणा ॥
अनेक जन्मपापानि कृतानि तव सम्मुखे ॥ गतानि मम क्षेत्रात्मलिङ्गसम्यग्निषेवणात् ॥
अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वरः ॥ पूजितोऽसि महादेव तत्क्षमस्वात्रमत्कृतम् ॥ इति पठेत् ॥

तत्र क्षेत्रपालाय बलिदानम् ॥ टेटकर्णक्षेत्रपालाय माषभक्तबलिर्नमः ॥ इति ॥ अन्यत्सर्वं बृहत्क्षेत्रप्रदक्षिणावत् ॥ सङ्कल्पवाक्ये अमुकक्षेत्रे मूलक्षेत्रप्रदक्षिणां करिष्ये इति विशेषः ॥

ततो होमप्रतिनिधिभूतं गोदानम् ॥ अद्येत्यादि अमुकगोत्रस्यामुकशर्मणो मम समस्तपापक्षयपूर्वकनित्यकर्म्मकालातिक्रमणमिथ्यावादमलिनीकरणादिदोषपरिहरणार्थं कृतस्य मूलक्षेत्रप्रदक्षिणाः साङ्गतासिध्यर्थम् इमां गां रुद्रदैवताकां तत्प्रत्याम्नायीभूतम् अमुकद्रव्यम् अमुकगोत्रायेत्यादिः ॥

ततो ब्राह्मणभोजनम् ॥ दक्षिणादानम् ॥ वस्त्रदानम् ॥ इति भैरवतन्त्र वराहस्कन्दपुराणनुसारी मूलक्षेत्र प्रदक्षिणाविधिः समाप्तः। शाके १७७५ शुभम् ॥

अथ मूलक्षेत्रे देवतापूजा भैरवबलिदानञ्चलिख्यते –

तत्रादौ गणेशनमनम् ॥ प्रथमं गणेशक्षेत्रं नत्वा अजां गृहीत्वा रुद्रतीर्थं गत्वा तत्र स्नानं कृत्वा लम्बोदरगणेशपूजनम् ॥ गोलोकेश्वरपूजनम् ॥ उन्मत्तभैरवाय एष बलिर्नमः ॥ इति माषभक्तबलिदानम् ॥१॥ इति प्रथमेऽह्नि कृत्यम्।

द्वितीयेऽह्नियक्षतीर्थस्नानं विकटगणेशपूजनं तिलतण्डुलनैवेद्यं यक्षेश्वरपूजनम् ॥ क्रोधनामकभैरवाय बलिः ॥

तृ.पिण्डारकक्षेत्रे वलाकोदकतीर्थे स्नानम् ॥ महादेवपूजनम् ॥ चण्डभैरवाय बलिदानम् ॥

चतुर्थे ॥ सहस्रधारातीर्थे स्नानम् ॥ धूम्रवर्णविनायकपूजनम् ॥ मोदकनैवेद्यम् ॥ ईशानेश्वरपूजनम् ॥ रुरुभैरवाय बलिदानम् ॥

पञ्चमदिने ॥ मणितीर्थे स्नानम् ॥ वक्रतुण्डगणेशपूजनम् ॥ धान्यलाजानैवेद्यम् ॥ कीलेश्वरमहादेवपूजनम् असिताङ्गभैरवाय बलिदानम् ॥ तत्रैव पूर्वोत्तरदिशां गत्वा वरदयोगिनीपूजानतिश्च ॥

षष्ठे ॥ सोमतीर्थस्नानम् ॥ एकदन्तगणेशपूजनम् ॥ यवशुक्लनैवेद्यम् ॥ सोमेश्वरपूजनम् ॥ संहारभैरवाय बलिदानम् ॥

सप्तमे ॥ सिद्धसरोवरतीर्थस्नानम् ॥ महोदरगणेशपूजनम् ॥ भीषणभैरवायबलिदानम् ॥

अष्टमदिने ॥ भृगुपाततीर्थे ब्रह्मकुण्डे स्नानम् ॥ गजाननगणेशपूजनम् ॥ इक्षुपर्वनैवेद्यम् ॥ मुक्तीश्वरमहादेवपूजनम्॥ कपालिनामकभैरवाय समाषदध्यक्षतबलिदानम्॥ इतिअष्टमुर्त्तिमूलक्षेत्रप्रदक्षिणा॥ ततो गुह्यकालीपीठं गत्वा क्षेत्राधिष्ठितदेवतापूजनादिपूर्वोक्तविधिः कार्यः ॥ इति संक्षिप्तम् ॥

## २. वाग्वतीतीर्थम्

**(यस शीर्षक अन्तर्गत रुद्रधारा, मणिमती, कोशी, वाग्वती आदि नदीका तटमा रहेका तीर्थहरूको स्मरण गरिएको छ।)**

सनत्कुमार उवाच

अथान्यत्संप्रवक्षामि तीर्थं पूर्वोक्तमेव च।प्रकामफलदं पुण्यं सुरासुरनमस्कृतम्॥१॥
वाग्वत्या मणिमत्याश्च सम्भेदे लोकपूजिते। गच्छामीत्युक्तमात्रेण भूयात्पापप्रणाशनम्॥२॥
सम्भेदे मणिमत्यास्तु गन्तुं यावत्कृतं पदम्। तावद्वर्षशतं स्वर्गे मोदते शिवभक्तिमान्॥३॥
वाग्वत्या मणिमत्याश्च संभेदे लोकपूजिते। स्नायते विधिना यस्तु पुण्यवान् भुवि कीर्त्यते॥४॥
तत्समीपे समुद्भूता रुद्रधारेति चोच्यते। कल्पिता देवदेवेन लोकानुग्रहकारिणा॥५॥
भुक्तिमुक्तिप्रदं पुण्यं शिवमायोपलक्षितम्। रुद्रधारोदयं दृष्ट्वा सर्वपापैर्विमुच्यते॥६॥
गयाया नैमिषाद्वापि कुरुक्षेत्राच्च पुष्करात्। स्नानं दशगुणं ज्ञेयं मणिमत्याः समागमे॥७॥
ब्रह्मवक्त्रसमुद्भूता तीर्थमाता सरस्वती। सोममण्डलसम्भूता गङ्गा त्रैलोक्यपावनी॥८॥
गौरीश्वेदसमुद्भूता कौशिकी कामदायिनी। वाग्वती तु सरिच्छ्रेष्ठा महादेवसमुद्भवा॥९॥
वाग्वतीं सरितां श्रेष्ठां यत्र यत्राऽवगाहते। तत्र तत्र फलं विद्याद्वाजपेयाश्वमेधयोः॥१०॥
तत्सत्यमेव नियतं यदुक्तं ब्रह्मणा पुरा। महादेवमुखोद्भूते किं संभाव्यते फलम्॥११॥
तदहं सम्प्रवक्ष्यामि स्तोत्रं कामफलप्रदम्। कीर्तनाच्छ्रवणाद्वापि पुण्यं भवति विस्तरम्॥१२॥

### वाग्वतीसप्तकम्

(वाग्वतीसप्तकम् र श्रीवाग्वतीस्तोत्रम् यी दुई रचनामा वाग्वतीको महिमा बताउँदै जलमूर्ति, शङ्करमूर्ति, सरस्वतीमूर्ति, चतुर्भुजा भगवती वाग्वतीको स्तवन गरिएको छ।)

नमः श्रीवाग्वत्यै।

ब्रह्मविष्णुविधुमौलिवन्दिता पर्वतेन्द्रतनयातिशीतला।
यत्तटे पशुपतिस्तपोव्रती वाग्वती जयति मोक्षसाधिनी॥१॥
सिद्धिदेऽमरगणे न मे स्पृहा पुण्यपुञ्जफलदे विधावपि।
कालतापशमनीं स्मराम्यहं वाग्वती जयति मोक्षसाधिनी॥२॥
किं करोति शमनोऽपि किंकरस्तीव्रशासनविधानलम्पटः।
यातना कुसुमतल्पसौख्यदा वाग्वती जयति मोक्षसाधिनी॥३॥
यत्कुटी त्रिदिवगर्वहारिणी यत्तटी मणिमयूखमालिनी।
यत्तटी सुरनगानुकारिणी वाग्वती जयति मोक्षसाधिनी॥४॥
यत्र सङ्गमवती मनोहरा सेव्यते मकरगे दिवाकरे।
तस्य तीर्थनृपतिर्वरप्रदो वाग्वती जयति मोक्षसाधिनी॥५॥
यत्तटे प्रियसखीव कालिका राजते रजतवर्णबालुका।
श्राद्धकर्मफलदा गयेव सा वाग्वती जयति मोक्षसाधिनी॥६॥
निर्मलाम्बुमृगनाभिवाहिनी पद्मबन्धुतनयानुकारिणी।
सर्वलोकतनुतापहारिणी वाग्वती जयति मोक्षसाधिनी॥७॥
स्नानकाले पठेन्नित्यं वाग्वतीस्तवसप्तकम्।
यस्तस्य प्राणयात्रायां मोक्षलक्ष्मीः करे स्थिता॥८॥

॥ इति श्रीवाग्वतीसप्तकम्॥

॥ शुभम्। भूयात्॥

### श्रीवाग्वतीस्तोत्रम्

नमस्ते वाग्वति देवि सर्वदुष्कृतनाशिनि। अद्य मे धूलितं पापं त्वद्दर्शनाच्चिरार्जितम्॥१॥
संस्पर्शनाच्च तीर्थानां विमुच्यते सुदुष्कृतैः। अङ्गदोषोद्भवैर्गाढैरमेध्यस्पर्शजैरपि॥२॥
तीर्थाम्बुपानतोऽगस्त्य जन्तुः पापैः प्रमुच्यते। मुखदोषोद्भवैः सद्यो ध्रुवं शपथजैरपि॥३॥
पानावगाहनान्मर्त्यो मुच्यते किल्विषैः क्षणात्। मानसैर्दोषकैश्चापि आनाभिपाततोऽनिशम्॥४॥
नाभिकुण्डसमुद्भूतं यत्तोयं शङ्करस्य च। जिह्वाग्राज्जलरूपेण पपात हिमगह्वरे॥५॥

वाग्वती शिवगङ्गेति त्वं वै ब्रह्मसरस्वती। महापातकिनः स्नात्वा सद्यो मुच्यन्ति किल्विषैः ॥६॥
अमुकतीर्थ महातीर्थ त्राहि मां शरणागतम्। अद्य मे धूलितं पापं तव दर्शनमात्रतः ॥७॥
॥ इति तीर्थदर्शनम् ॥
वाग्वती सरितां श्रेष्ठा वाग्वती लोकपावनी। शतगङ्गासमा ज्ञेया कलौ प्राप्ते हि वाग्वती ॥८॥
विरञ्चिवैकुण्ठशिवेन्द्रवन्द्ये बहूनि पापानि मया कृतानि।
विनाशहेतोऽह्नि तदेनसां वै दण्डप्रणामं प्रकरोमि नित्यम् ॥९॥
वरुणाय च देवाय अम्भसां पतये नमः। रुद्रात्मने जलेशाय रसानां पतये नमः ॥१०॥
पवित्रितं जगत्सर्वं जगदुद्धरणाय च। येन प्रतिष्ठितं तस्मै जीवनाय नमो नमः ॥११॥
नदी सा पूतसलिला हरमूर्तिरियं स्मृता। स्नातास्तस्यां विमुच्यन्ते जलमूर्ते नमोऽस्तु ते ॥१२॥
एवं स्तुत्वाशु तीर्थपः प्रतिगृह्योपहारकम्। सरस्वतीं महादेवीं तीर्थे स्वान्तेन भावयेत् ॥१३॥
नाभिकुण्डसमुद्भूतां शम्भोर्वक्त्राद्विनिःसृताम्। मुक्तास्फटिकचूर्णाभां बालुस्खलितवाहिनीम् ॥१४॥
वाग्वतीं तां द्रवीभूतां सर्वलोकैकसेविताम्। शुद्धस्फटिकसङ्काशां त्रिनेत्रां चारुहासिनीम् ॥१५॥
चतुर्भुजां महेशानीं मकरकुण्डलार्चिताम्। सम्पूर्णेन्दुमुखीं देवीं सर्वाभरणभूषिताम् ॥१६॥
दधानां सर्वशो हस्तैः पाशांकुशवराभयान्। एवं सञ्चिन्त्य तीर्थे तामानाभिजलमाविशेत् ॥१७॥
॥ इति ध्यानम् ॥

पूर्वसङ्कल्पसिद्धिरस्तु ॥

अद्याहममुकगोत्रस्यामुकवर्मणो मम कायवाङ्मनोजनितज्ञाताज्ञातकृतसर्वपापक्षयश्रीवाग्वतीप्रसन्नतासकलशास्त्रोक्त-सर्वयज्ञफलप्राप्तिकामः श्री ३ स्वेष्टदेवता-सुप्रीतिशिवलोकपूजितत्वकामः, अमुकतीर्थस्नानमहं करिष्ये। इति सङ्कल्पः।

॥ इति वाग्वतीस्तोत्रं समाप्तं शुभम्।
(इति संवत् १९११ साल आश्विनकृष्णदशमीतिथौ शनिवासरे लिखितम्।)

३. वाग्वतीवाक्यसमुच्चयः

**(वाग्वती नदीमा जाँदा उहाँको नामोच्चारण र दर्शनका विधिबारे यस शीर्षकमा चर्चा गरिएको छ। यो वाग्वतीवाक्यसमुच्चय वाग्वतीप्रशंसा नामक ग्रन्थबाट उद्धृत गरिएको हो।)**

ॐ ॐ अद्य सकलपापक्षयकामो वाग्त्या नामोच्चारणमहं करिष्ये ॥ दर्शने - अद्य सर्व्वभूतिफलप्राप्तिकामो वाग्वत्या दर्शनमहं करिष्ये ॥ जलपाने - अद्य वाजपेयाश्वमेधफलप्राप्तिकामो वाग्वत्या जलपानमहं करिष्ये। वाग्वतीजलेन शिवलिङ्गस्नपनम्। अद्य यावज्जीवकृतपापक्षयकामो वाग्वतीजलेन शिवलिङ्गस्नपनमहं करिष्ये ॥ स्मरणे - अद्य सर्व्वरोगोपशमविगुणग्रहोपशमप्राप्तिकामोवाग्वत्याः स्मरणमहं करिष्ये ॥ स्नाने - अद्य तिर्यग्योनिजन्माभावकामो वाग्वत्यां स्नानमहं करिष्ये ॥ तत्र मरणे - अपुनर्भवफलम् ॥ सर्व्वकिल्विषनाशो वा देहत्यागानन्तरं शिवलोकगमनं वा गङ्गाद्वारजनितपुण्यदशगुणपुण्यप्राप्तिः फलं वा ॥ कीर्त्तने - अद्य सर्व्वपापक्षयकामो वाग्वतीकीर्तनमहं करिष्ये ॥ मन्वन्तरादौ स्नाने - अयं मन्वन्तरादौ रेवास्नानजन्यपुण्याक्षयत्वप्राप्तिकामो वाग्वत्यां स्नानमहं करिष्ये ॥ आचमने - अद्य दिवं प्रति लोकगमनकामोवाग्वतीजलेनाचमनमहं करिष्ये ॥ हिरण्यदाने - अद्याक्षयहिरण्यदानफलप्राप्तिकामो वाग्वतीतीरे हिरण्यमिदमग्निदैवतं यथानामगोत्राय ब्राह्मणायेत्यादि दक्षिणाञ्च ॥ चन्द्रग्रहणे - अस्यां रात्रौ राहुग्रस्ते दिवाकरे दशलक्षगुणवाग्वतीस्नानजन्यफलसमफलप्राप्तिकामो वाग्वत्यां स्नानमहं करिष्ये। सङ्क्रान्तौ - अद्य रविसङ्क्रान्तौ कोटिगुणवाग्वतीस्नानजन्यफलसमफलप्राप्तिकामो वाग्वत्यां स्नानमहं करिष्ये। यत्र कुत्रापि वाग्वतीस्नाने - ॐ अद्य तिर्यग्योनिगमनाभावपूर्व्वकविमलकुलजन्मप्राप्तिकामो वाग्वत्यां स्नानमहं करिष्ये। तिर्यग्योनिगमनाभावपूर्व्वकामावाप्तिर्वा फलं वाजपेयाऽश्वमेधजन्यफलसमफलप्राप्तिर्वा फलम्। ॥ इति श्रीवाग्वतीप्रशंसायां वाक्यसमुच्चयं नाम द्वाविंशोध्यायः समाप्तः ॥

॥ श्रीमहादेवप्रीतिरस्तु ॥

४. देवतीर्थादिनाममाला

**(यस शीर्षकमा देवतीर्थहरूका नामहरूको निरूपणका साथै चौंसट्ठी देवतीर्थ, वाग्वती नदीका तीरमा रहेका तीर्थ एवं हिमालयमा रहेका तीर्थहरूको वर्णन गरिएको छ। यस शीर्षकका विषयवस्तुहरू महत्त्वपूर्ण भएता पनि यो खण्डित अवस्थामा प्राप्त भएकाले यसभित्र रहन पर्ने अनेकौं तीर्थहरूका नाम छुटेका छन्।)**

चतुःषष्टिलिङ्गानि

कुशेश्वरः प्राक्कथितः स्वयंभूर्भीमेश्वरः शम्भुरयं द्वितीयः। काफीश्वरः शङ्करकस्तृतीयः श्रीकश्यपस्येश्वर एवमन्यः॥
निगद्यतेऽतः स्फटिकेश्वरश्च चण्डेश्वरश्चैव धनेश्वरोऽपि।
तथा महेशो विकटेश्वरोऽन्य इन्द्रेश्वरो यो नवमस्तु बोध्यः॥२८॥
भालेश्वरोऽथो दशमश्च गुप्तेश्वरस्ततश्चैव तिलेश्वरश्च।
श्रीचम्पकस्येश्वर एवमुक्तो रामेश्वरः स्थूलशिलास्वरूपः॥२९॥
कालेश्वरो नटारम्भेश्वर उद्दालकेश्वरः। श्रीगोपालेश्वरस्तस्माच्छीवम्बेश्वर एव च॥३०॥
उत्पत्तीश्वरनन्दिकेश्वरहरौ श्रीगोखुरस्येश्वर-
श्चान्यः श्रीयुतपाण्डुकेश्वरहरस्तद्वच्च कूटेश्वरः।
श्रीकण्ठोऽह्यसितेश्वरः प्रकथितः श्रीभैरवस्येश्वरः
श्रीब्रह्मेश्वरसंज्ञया च कथितः स्कन्देश्वरः शोभनः॥३१॥
शतरुद्रेश्वरो देवः श्रीकाकेश्वर इत्यपि। मणिचूडेश्वरो योगेश्वरो नारायणेश्वरः॥३२॥
ज्योतिर्लिङ्गेश्वरो रुद्रो रत्नचूडेश्वरः परः श्रीवागीश्वर ईशोऽयं प्रभुः कीलेश्वरः शिवः॥३३॥
श्रीवाल्मीकीश्वर इति प्रवदन्ति चाऽन्यं श्रीमङ्गलेश्वर उदाहृत एवमेव।
शून्याऽब्धि (४०) सम्मितमृडो विमलेश्वरश्चाऽनन्तेश्वरः पशुपतिर्भवदुःखहर्ता॥३४॥
श्रीविश्वरूपेश्वरसोमलिङ्गेश्वरौ च तौ धर्मपती वरेण्यौ।
श्रीगोभराटेश्वर एव भृङ्गेश्वरस्त्रिलिङ्गेश्वरनामविख्यः॥३५॥
अथेतरः श्रीकुपितेश्वरो वै सर्वेश्वरः पूज्यतमः पुरारिः।
गोलोकयुक्तस्तत ईश्वरोऽपि श्रीचन्दनभ्रायुतटेश्वरोऽन्यः॥३६॥
यक्षेश्वरस्ताण्डवराजराजः श्रीचण्डिकायाः पर ईश्वरश्च।
धर्मेश्वरो धर्ममतिप्रदोगोकर्णेश्वरः पारदनीलकण्ठः॥३७॥
कोटिश्वरः श्रेष्ठतरः स्मरारिर्वाणेश्वरो वै वृजिनापहारी।
ज्ञानेश्वरो ज्ञानिसमूहसेव्यः श्रीपर्वतस्येश्वर एव पूज्यः॥३८॥
जलेश्वरोऽजन्मफलाऽभिदाता गुह्येश्वरो नारककष्टहर्ता।
ततः किरातेश्वर ईर्यते वै भस्मेश्वरोऽथो भुवनेश्वरोऽन्यः॥३९॥
भक्ताभीष्टप्रदपशुपतेरुत्तरे सन्निधाने
रुद्रागारेश्वर इति ततो वर्तते चारुलिङ्गः।
यात्रायां यो हि गणनचतुःषष्टिसंख्यः परेश-
श्चान्त्योऽसौ श्रीसुरगणवरो मोक्षदोऽनाथनाथः॥४०॥
कुशेश्वरादीनि शिवात्मकानि वेदर्तु (६४) लिङ्गानि मनोहराणि।
प्रपञ्चवैश्वानरजाततापं कारुण्यवार्भिः शमयन्तु तूर्णम्॥४१॥
॥ इति श्री देवतीर्थादिनाममालायां क्रमेण कुशेश्वरादिचतुःषष्टिशिवलिङ्गनामवर्णनं नाम तृतीयखण्डम्॥

चतुःषष्टिदेवतीर्थानि

दुर्गातीर्थं देवतीर्थं ह्रदतीर्थं समीरितम्। धारातीर्थं स्वर्णतीर्थं काश्यपं तीर्थमुत्तमम्॥४२॥
कान्तितीर्थं चोग्रतीर्थं पुष्पतीर्थं ततः परम्। शचीगन्धर्वतीर्थे च तीर्थं सिद्धरसाभिधम्॥४३॥
मनः श्रीतीर्थमथ वै तीर्थं ख्यातं सरस्वती। प्रभातीर्थं कालतीर्थं ब्रह्मतीर्थं ततोऽभिधम्॥४४॥
रुद्रतीर्थं कनखलतीर्थं गोपालसंज्ञकम्। व्याघ्रतीर्थं ब्रह्मतीर्थं स्वर्णं नन्दीतितीर्थके॥४५॥
गोतीर्थं भद्रतीर्थञ्च तीर्थं नारदनाम च। अथो गालवतीर्थञ्च ततोह्यऽसिततीर्थकम्॥४६॥
ततश्च भैरवीतीर्थं ब्रह्मतीर्थं प्रकीर्तितम्। स्कन्दतीर्थं नृसिंहाख्यं तीर्थं श्रीसुन्दरीत्यपि॥४७॥
गङ्गातीर्थं कर्णतीर्थं योगतीर्थं ततः परम्। रत्नह्रदाभिधं तीर्थं वीरतीर्थञ्च कीर्तितम्॥४८॥
शङ्खह्रदाख्यं तीर्थञ्च भद्रमङ्गलतीर्थके। श्रीमलोदकतीर्थञ्च ऋषितीर्थं तथाविधम्॥४९॥
श्रीशुद्धगङ्गातीर्थञ्च सोमगोशृङ्गतीर्थके। नागह्रदाख्यं तीर्थञ्च मुनिकुण्डाख्यतीर्थकम्॥५०॥

एवं चोदककुण्डञ्च गौरीकुण्डमनुत्तमम्। नागह्रदाभिधं तीर्थं रुद्रतीर्थं ततः परम् ॥५१॥
मीनतीर्थं मातृतीर्थं चन्द्रकूपाख्यतीर्थकम्। नवधारा तीर्थरूपा भस्मतीर्थञ्च नन्दिनी ॥५२॥
तीर्थं श्रीयक्षकुण्डश्च विज्ञेयं विबुधैस्ततः। पिण्डारककुण्डतीर्थं धर्मतीर्थं सुदुर्लभम् ॥५३॥
पितामहाभिधं तीर्थं कोषतीर्थं ततः परम्। शङ्खमूलाख्यतीर्थं च रुद्रधारेति तीर्थकम् ॥५४॥
हनुतीर्थं बाणगङ्गा ज्ञानकूप इतीति वै। ज्ञानधारा तीर्थरूपा मयूरतीर्थमुत्तमम् ॥५५॥
श्रीजलेश्वरतीर्थं च तीर्थं गुह्येश्वरीति च। रुद्रसहस्रतीर्थं च भस्मगङ्गाभिधं च तत् ॥५६॥
ज्ञानकूप इति प्रख्यमाऽऽर्यातीर्थं तथा विदुः। ततः खर्वरिकातीर्थं रुद्रमानोदकं च तत् ॥५७॥
॥ इति श्रीदेवतीर्थादिनाममालायां क्रमरीत्या पूर्वोक्तचतुःषष्टिदेवतीर्थनामवर्णनं नाम चतुर्थं खण्डम् ॥

वाग्वतीतीर्थानि

पशुपतिः सततं हि विराजते भुवि यतः प्रथिता तटिनीवरा।
अतिधुनोतुमनोममवाग्वतीवृजिनपन्नगविष्णुरथात्मिका ॥
श्रीवाग्वतीव्याघ्रतीर्थं गोपालेश्वरतीर्थकम्। कट्वालतीर्थे श्रीसेतुबन्धतीर्थं मनोहरम् ॥५९॥
ततो वासुकितीर्थं च तथा भद्रावतीत्यपि। व्याघ्रतीर्थं च हनुमत्तीर्थं सर्वमयाभिधम् ॥६०॥
सीतातीर्थं लक्ष्मणाख्यं रामचन्द्राह्वतीर्थकम्। गोपालतीर्थकं पश्चाद्दामोदर इतीरितम् ॥६१॥
सूर्योदयाभिधं चन्द्रोदयतीर्थं सुलोचना। मत्स्येन्द्रतीर्थं सर्वौषधीतीर्थं च वराहकम् ॥६२॥
ककागणेशतीर्थं च श्रीगजाननतीर्थकम्। ततः कर्कोटतीर्थं च यच्चक्रन्तु सुदर्शनम् ॥६३॥
तत्तीर्थं भृगुपतनमिति तीर्थं प्रभावती। सप्तनीलाभिधं तीर्थं कायनिर्मलसंज्ञकम् ॥६४॥
शक्रतीर्थं टेकुपञ्चनदीतीर्थं ततः परम्। तीर्थं बोध्यं च पचलीभैरवाभिधमुत्तमम् ॥६५॥
कालमोचनतीर्थं च ततस्तीर्थं सहोदरः। वाणगङ्गेति तीर्थं च तीर्थं मृत्युञ्जयाभिधम् ॥६६॥
उमामहेश्वराख्यं च शङ्खमूलं ततः परम्। रुद्रधाराऽमरावत्यौ तीर्थं च विमलावती ॥६७॥
तीर्थरूपा ततो ज्ञेया विद्वद्भिर्निर्मलावती। वायुमती योगमती तथा सिद्धिमतीति च ॥६८॥
त्रिलोचना तीर्थरूपा तीर्थं कुम्भेश्वराभिधम्। सत्यभामाप्रयागाख्यतीर्थेनुमणिकर्णिका ॥६९॥
पीठिकाख्या तीर्थरूपा एवं तीर्थं त्रिविक्रमः। सुवर्णतीर्थकं ब्रह्मश्मशानाख्यं ततः परम् ॥७०॥
राजश्मशानतीर्थं च राजराजेश्वरी परा। उमामहेश्वराख्यं च तीर्थं सामन्तकाभिधम् ॥७१॥
क्षेत्रपालस्तथा भस्मेश्वरविष्णू इतीरिते। जयपूर्वामङ्गलेति तथा ह्याऽऽकाशभैरवी ॥७२॥
तीर्थं च वत्सला ज्ञेयं ततः पञ्चविनायकः। मातृतीर्थं तथा कोषोदकतीर्थमनुत्तमम् ॥७३॥
तीर्थं सौभाग्यसंज्ञं च कुबेराख्यं ततः परम्। गौरीतीर्थं खर्वरिकातीर्थं चैवमृगोदकम् ॥७४॥
आर्याप्रावणिकातीर्थे तीर्थं नारायणीत्यपि। त्रिवेणी च गणेशश्चाऽगस्त्यतीर्थं समीरितम् ॥७५॥
नीलकण्ठो वासुकिश्च देवघट्टाभिधं ततः। गोखुरभृगुपतनतीर्थे ब्रह्मसहस्रकम् ॥७६॥
विष्णुसहस्रतीर्थञ्च तीर्थं रुद्रसहस्रकम्। सुदर्शनचक्रतीर्थं सूर्यभागाऽतिपुण्यदा ॥७७॥
चन्द्रभागा ततस्तीर्थं श्रीमनःकामना ततः। ज्ञानवापीति तीर्थं च तीर्थं कर्कोटनामकम् ॥७८॥
जिह्वालोलाऽनन्तगौरी बालस्मशानमित्यपि। रुद्रसहस्रतीर्थञ्चाऽथ विनायकनामकम् ॥७९॥
तीर्थं भैरवकुण्डं च तीर्थं चेति जलेश्वरः। गुह्येश्वरः पशुगणस्ताम्रचूडस्तथेति वै ॥८०॥
श्लेष्मान्तकाभिधं तीर्थं पापहारि जनस्य तत् ॥८१॥
त्रिशूलगङ्गोत्तरवाहिनी च श्रीशैलगङ्गा हनुमानिमानि। तीर्थानिहत्यायुतमोचनञ्च कैलासतीर्थं हिमवत्सुतीर्थम् ॥८२॥
श्रीविष्णुपदतीर्थञ्च ततो गणपतिस्तथा। महागणपतिस्तीर्थं भृगुपतनमित्यपि ॥८३॥
चन्द्रबिम्बं सूर्यबिम्बं ततो वासुकिसंज्ञकम्। सुदर्शनचक्रतीर्थं गोकर्णेश्वरनामकम् ॥८४॥
तीर्थमेवोत्तरगया गदाधरपितामहौ। चन्द्रभागानारदाख्यं सप्तर्षिरिति कीर्तितम् ॥८५॥
कपोतसंज्ञकं कान्तिभैरवाख्यं ततोऽपि हि। उत्तरावाहिनी चैव कोलमती गजाभयम् ॥८६॥
धनुःसंज्ञकतीर्थञ्च काकगङ्गेति तीर्थकम्। श्वेतवाराहतीर्थं च महाकालोथऽवाल्मीकिः ॥८७॥
तीर्थं शैलमती चैव वाग्वतीपतनं ततः। सहस्रधारातीर्थञ्च तथा बुद्धिमतीति च ॥८८॥
तीर्थं नागमतीतीर्थं सुन्दरीत्यऽमलाम्बु च। विमलाम्बुनिर्मलाम्बुमदनाम्ब्वभिधानि च ॥८९॥

धवलाम्बुसंज्ञकञ्च योगाम्बुसंज्ञकं तथा। विश्वाम्ब्वाख्यञ्च सिद्धाम्बुसंज्ञया कथितं ततः ॥९०॥
कामधेनुरिति प्रख्यं शतरुद्राभिधं परम्। अगस्त्याऽनन्ततीर्थे वै द्वे मनोहारिणी ततः ॥९१॥
अप्सरस्तीर्थमित्येवं कुमारतीर्थमित्यपि। तारातीर्थं विष्णुलक्ष्मीतीर्थं बोध्यं पुरातनम् ॥९२॥
इन्द्रगौरीति तीर्थञ्च तीर्थं ब्रह्मसरस्वती। वाग्वत्यां संस्थितानीति तीर्थानि क्रमरीतितः ॥९३॥
कीर्तयन्ति जना ये के तेषां सिद्धिः सुशुद्धता ॥९४॥
॥ इति श्रीदेवतीर्थादिनाममालायां वाग्वतीयात्राक्रमतो वाग्वतीतीर्थनामवर्णनं नाम पञ्चमखण्डम् ॥

हिमवत्तीर्थानि

वरेण्यो बदरीनाथो नरनारायणावृषी। केदारनाथष्टुपकेश्वर उत्तरकाशिका ॥४७॥
गङ्गोत्तरी शिरश्छिन्नगणेशो मध्यमेश्वरः। जयन्तगङ्गा त्रियुगी नारायण इतीरितः ॥४८॥
महादेवगुहा ब्रह्मकपालीति शिला परा। तथा पुस्तकवस्त्रं च पण्डुकेश्वर एव च ॥४९॥
गौरीकुण्डं तप्तकुण्डं हंसकुण्डं मनोहरम्। अनसूया चन्द्रपुरी गुप्तकाशी च नारदः ॥५०॥
वसुधारा शेषधारोदककुण्डं तपोवनम्। पाणिगङ्गा ज्ञानकुण्डं कगस्तुमुनिरेव च ॥५१॥
नन्दा गङ्गा च गरुडगङ्गा माणिक्यनाथकः। एवञ्च विरहिगङ्गा ततो गोपेश्वरः शिवः ॥५२॥
भैरवो वृद्धकेदारः स्वर्गद्वारमुखीमठः। भिल्लाङ्गना रुद्रनाथस्तुङ्गनाथः प्रकीर्तितः ॥५३॥
कल्पेश्वरः सत्यपथस्तथा चरणपादुका। श्यामकर्णः शेषनेत्रं व्यासपुस्तकमेव च ॥५४॥
अशीसङ्गमतीर्थञ्चाऽलकनन्दा महानदी। व्यासघट्टो वामघट्टो भीमसेनो महाबलः ॥५५॥
तथा काञ्चनगङ्गा च धौलीगङ्गा ततः परा। अन्या गोमुखधारा च महेन्द्रः पर्वतो महान् ॥५६॥
श्रीहाटकमहादेवो विष्णुप्रयाग एव च। देवप्रयागः परमश्चाऽन्यः कर्णप्रयागकः ॥५७॥
चन्द्रप्रयाग एवञ्च तथा रुद्रप्रयागकः। अन्यो नन्दप्रयागश्च ततो वै कदलीवनम् ॥५८॥
श्रीउत्तरप्रयागश्च हृषीकेशस्तथापरः। भविष्यबदरी योगबदरी ज्वालपा तथा ॥५९॥
श्रीचन्द्रवदना ह्याऽऽदिबदरी कमलेश्वरः। श्रीरामनगरं ज्ञानबदरी श्रीपुरं ततः ॥
रेतःकुण्डं शिवा नन्दी कालेश्वरशिवस्तथ ॥६०॥
श्रीकेशवप्रयागश्च भिल्लकेदार एव च। योगेश्वरस्तथा विद्याकोटिःश्रीकिल्किलेश्वरः ॥६१॥
उषा कुमारी मान्धाता घण्टाकर्णस्ततः परः। मधुगङ्गा दुग्धगङ्गा श्रीनृसिंहशिला शुभा ॥६२॥
मार्कण्डेयशिला शुद्धा श्रीवाराहशिला शुभा। श्रीनारदशिला चैवं ततः श्रीगारुडी शिला।
इत्थं धर्मशिला प्रोक्ता तत आकाशभैरवः ॥६३-६४॥
ततः प्रह्लादधारा च कूर्मधारा तथा परा। श्रीचतुर्वेदधारा च मातृमूर्तिः परा तथा ॥१६४॥
राजराजेश्वरी कीर्तिनगरं भरतस्ततः। लक्ष्मणान्दोलनं यत्तु लोके लक्ष्मञ्झुला हि तत्
महापथः पाण्डवाश्च कैलाशश्च महामनुः ॥१६६॥
॥ इति श्रीदेवतीर्थादिनाममालायां बदरीनाथादि नामवर्णनं नवमखण्डम् ॥९॥

विविधतीर्थानि

ब्रह्मलोकं विष्णुलोकं रुद्रलोकं ततः परम्। सुमेरुः कल्पवृक्षोऽपि पारिजातोऽमरावती ॥६७॥
अलका नगरी चैवं निधयश्चाऽष्टसिद्धयः। इन्द्राग्नियमनिर्ऋतिवरुणाः पवनस्तथा ॥६८॥
कुबेर ईश्वरो ब्रह्माऽनन्तो नाथा दिशाममी। नवग्रहाश्च वसव आदित्या रुद्रसञ्चयाः ॥६९॥
गौर्यादिमातरः साध्या गन्धर्वाप्सरसां गणः। त्रयस्त्रिंशत्परिमिताः कोट्यो वै देवताः पराः ॥७०॥
चतुर्विंशतितत्त्वानि परात्मा शक्तिरेव च। हिमाद्रौ विद्यते मुख्यं शिवकुण्डं सुशोभनम् ॥७१॥
नीलकण्ठं रक्तकुण्डं दुग्धकुण्डं नवादिमम्। सूर्यकुण्डं चन्द्रकुण्डं ब्रह्मकुण्डं ततः परम् ॥७२॥
गौरीकुण्डं चाऽग्निकुण्डं सतीकुण्डं तथाविधम्। सरस्वतीकुण्डमिति लक्ष्मीकुण्डं ततः परम् ॥७३॥
नागकुण्डं स्कन्दकुण्डं तथा भैरवकुण्डकम्। गणेशकुण्डकं गोदावरीकुण्डं मनोहरम् ॥७४॥
परशुरामकुण्डञ्चाऽलिलकुण्डं ततः परम्। यष्टिविनायको देवो लोके लौरीविनायकः ॥७५॥
चाँगुनारायणो वृद्धनीलकण्ठाभिधो हरिः। विशंखुनारायणकस्ततः सूर्यविनायकः ॥७६॥

तथा श्रीयुक्तशिखरनारायण इतीरितः। इचङ्गुनारायणकस्ततः कार्यविनायकः ॥७७॥
चन्द्रविनायकश्चैव ततो जलविनायकः। काष्ठमण्डपदेशस्थस्तथाऽशोकविनायकः ॥७८॥
देवी श्रीगुह्यकाली च शिवः पशुपतिः स्वयम्। गोरक्षो विश्वरूपश्च विरूपाक्षो विराटकः ॥७९॥
जयवागीश्वरी ब्रह्मा सिद्धेशो वनकालिका। शिवशक्तिर्वत्सला च ततः श्रीवज्रयोगिनी ॥८०॥
दक्षिणा कालिका चोग्रा शुभा भगवती शुभा। श्रीभद्रकाली श्रीपञ्चकुमारी रक्तकालिका ॥८१॥
श्रीश्वेतकाली श्रीकङ्केश्वरी लुचुमडिस्तथा। ततः श्रीवज्रवाराही मैतीदेवीतिसङ्कटा ॥८२॥
फुल्चोकी नवदुर्गा च ततो गोरक्षकालिका। श्रीभाटभोटिनी बालकुमारी शीतला तथा ॥८३॥
चण्डेश्वरी सती देवी क्वाट्सीदेवीति चम्पिका। माता श्रीसुन्दरीदेवी तुलजा कमला परा ॥८४॥
स्वस्थानी भैरवी देवी नासिका मालिकाऽभिधा। देवी श्रीनीलवाराही विष्णुदेवी हरिप्रिया ॥८५॥
सङ्कष्टनाशिनी देवी हिंगुलाजाभिधा परा। शल्यान्कोटिस्थिता माता द्यौराली विजयेश्वरी ॥८६॥
श्रीपाटनाख्या देवी च श्रीमनःकामना ततः। ज्वालामुखी वैष्णवी च श्रीचिन्तापूरणीति च ॥८७॥
कालिञ्चोकस्थिता देवी ब्रह्माणी दुःखनाशिनी। कौमारी चालुपी देवीन्द्राणी च गजवाहिनी ॥८८॥
चामुण्डा च महाविद्या दशसंख्यास्ततः परा। मङ्गला पिङ्गला धान्या भ्रामरी चैव भद्रिका ॥८९॥
उल्का सिद्धा सङ्कटा च योगिन्यः कीर्तिताः क्रमात्। कल्याङ्खुनाम्नी देवी च स्वयंभूभगवांस्ततः ॥९०॥
श्रीबालालहरीतीर्थं बालुकाकुण्डमेव च। श्रीतप्तोदकतीर्थञ्च यत्र रोगः प्रशाम्यति ॥९१॥
हिमालयेश्वरो देवो नेपालेश्वर एव च। स्वर्णशृङ्गेश्वरश्चैवाऽनन्तलिङ्गेश्वरः प्रभुः ॥९२॥
श्रीजटाशङ्करो देवः श्रीकीर्तिमुखभैरवः। महाकालो देवघट्टः पालपाभैरवस्तथा ॥९३॥
गर्गेश्वरो भारदेवो वंशगोपाल एव च। हिमलिङ्गात्मको रुद्रोऽमरनाथोऽतिविस्मयः ॥९४॥
ऋषीश्वरस्तथा देवो गलेश्वर उदाहृतः। कपिलो बुद्धनाथश्च श्रीनारायणमन्दिरम् ॥९५॥
विष्णुमती रुद्रमती तथा नीरामती नदी। इक्षुमती मणिमती तथा चेन्द्रमती नदी ॥९६॥
मनोमती श्यालमती ततो हनुमती नदी। पुण्यमती रोषमती तथा लीलावती नदी ॥९७॥
मनोहरा शृङ्गमती ततो वै शीतलोदका। शारदाख्या शालिनदी भेरी वै सप्तकौशिका ॥९८॥
चम्पानदी च तमसा नदी चैव मनःशिला। मादी नदी दरम्दी च मर्स्याङ्दी च महानदी ॥९९॥
वेत्रावती सूर्यभागा चन्द्रभागा च गण्डकी। त्रिशूली चैव कर्णाली नदी गोदावरी नदी ॥१००॥
वत्सला गण्डकी शुक्ला गण्डकी च ततः परा। तथा कृष्णा गण्डकी च श्रीवृद्धागण्डकी नदी ॥१०१॥
करतोया भीमरथी विश्वा सिन्धुः शरावती। सुरसा बाहुदा तापी ऋषिकुल्या दृषद्वती ॥१०२॥
इन्द्रनामा तडागश्च तथामानतडागकः। भीमपुष्करिणी चैव सिद्धपुष्करिणी ततः ॥१०३॥
दुग्धपुष्करिणी मानसरोवर उदाहृतः। कालमोचनतीर्थस्य यमेश्वर इतीश्वरः ॥१०४॥
गोरक्षनाथो मत्स्येन्द्रनाथो वै मीननाथकः। नव नाथास्ततः प्रोक्ता भृगुतुङ्गेश्वरः शिवः ॥१०५॥
जनकस्य पुरं चैव जानकीरामसागरः। सीताकुण्डं लक्ष्मणाख्यं कुण्डं भरतकुण्डकम्।
अग्निकुण्डं रुरुक्षेत्रं विष्णुपञ्जाख्यदेवता। श्रीटीकाभैरवः सत्यदुर्गा सिद्धिविनायकः ॥१०७॥
अहो नाम्ना चन्द्रकूपो भस्मलिङ्गमयः शिवः ॥१०८॥
कैलासो गौरीकुण्डञ्च तथा मानसरोवरः। तारानाथः खार्पुनाथश्छायानाथश्च खेचरः ॥१०९॥
बटुभैरवनाथश्च सिद्धश्चन्दननाथकः। ऋणमोक्षः कार्त्तिकेयो रल्लिङ्गो रत्नचूडकः ॥११०॥
मालिका खेशमाली च काली कनकसुन्दरी। त्रिपुरसुन्दरी देवी जालपा च महाभयः ॥१११॥
ख्याता वैश्वानरज्वाला शिरोनाभिश्च पादुका। ऋक्सेनं देवकूटञ्च वैद्यनाथो विनायकः ॥११२॥
वज्रेश्वरः शीलदेवी गोलादेवी च भैरवी। वागीश्वरी नागनाथः पातालभुवनेश्वरः ॥११३॥
रत्ननाथो मेलनाथो मुक्तिनाथो महेश्वरः। गोरक्षः कालिका विन्दुवासिनी सिद्धकालिका ॥११४॥
दामोदरो हरिहरो हरद्वारं वराहकः। हिमवत्प्रभवाः सर्वा नद्यस्तीर्थानि सर्वशः ॥११५॥
पूर्वन्तु पौरुषं रूपं वराहो नारदस्ततः। नरनारायणौ चैव कपिलो मुनिसत्तमः ॥११६॥
दत्तात्रेयश्च यज्ञश्च ऋषभश्च पृथुस्तथा। मत्स्यः कूर्मस्तथा धन्वन्तरिः पश्चाच्च मोहिनी ॥११७॥
नृसिंहो वामनश्चैव जामदग्न्यस्तथैव च। व्यासो रामो दाशरथिर्बलरामस्तथाऽपरः ॥११८॥
कृष्णो बुद्धोऽथ कल्किश्च चतुर्विंशतिसंख्यकाः। अवताराः प्रकथिताः श्रीविष्णोः परमात्मनः।

शालिग्रामः कुशो बिल्वो विभूतिर्ब्राह्मणो गुरुः। अश्वत्थो गौर्वटो धात्री तुलसी मुकुरो मनुः ॥११९॥
चिन्तामणिः कुंकुमञ्च गीता दूर्वा सुधोद्भवा। साधवः श्रीभागवताः पूतास्ते पावयन्तु माम् ॥१२०॥
धर्मराजश्चित्रगुप्तो यमश्च श्रवणादयः। तत्पत्न्यो दिग्गजाश्चैव दिशो दश ततो ह्यणुः ॥१२१॥
निमेषादिक्षणश्चैव मुहूर्तो दिवसं निशा। वासराः सप्त पक्षौ च मासर्तू ह्ययने ततः ॥१२२॥
युगाः श्रीकामधेनुश्च सिद्धाश्च मनवः पराः। शुकदेवः शौनकादिमुनयः सूत एव च ॥१२३॥
श्रुतिस्मृतिपुराणानि शास्त्राणि सनकादयः। पराशरो वाल्मीकिश्च भृग्वादिमुनयः शुभाः ॥१२४॥
श्रीकश्यपः सृष्टिकर्ता ज्ञानिनो जनकादयः। मार्कण्डेयो लोमशादिबहुजीविन एव ते ॥१२५॥
अनन्तो वासुकिर्नागः कालियस्तक्षकादयः। स्कन्दः कर्कोटकश्चैवं दमयन्तीपतिर्नलः ॥१२६॥
ऋतुपर्णो राजराजः सूर्याश्वावः ... (इत्यादिखण्डितम्)।

५. रुद्रावतीतीर्थयात्रा

**(यस शीर्षकमा काठमाडौँ उपत्यकामा रहेकी रुद्रावतीका तटमा बनेका तीर्थहरूमा यात्रा गर्ने विधिका साथै ती ती तीर्थहरूको महिमा बताइएको छ।)**

श्री गणेशाय नमः।

ईश्वर उवाच

रुद्रस्य जटिले भवा दिवि च सा शीताम्बुभिर्निर्मला। लोकानां सुखहेतवे विरचिता तस्मै परस्मै नमः ॥१॥
जाह्नवी समगङ्गा च ज्येष्ठिला नाम वत्सला। स्वयं रुद्रावती ज्ञेया ज्येष्ठिला ज्येष्ठिलावती ॥२॥
पञ्चक्रोशप्रमाणञ्च अध उर्ध्वं प्रकीर्तितम्। अधःस्थानं प्रवक्ष्यामि वाग्वतीसङ्गमे शुभम् ॥३॥
नारदेन पुरा प्रोक्तं पापघ्नं पुण्यवर्द्धनम्। वाग्वतीसङ्गमारभ्य ज्येष्ठिलानाभिकुण्डयोः ॥४॥
तीर्थानां सङ्गमे स्नात्वा कुष्ठव्रणैर्विमुच्यते। महापातकं नश्यति वाग्वतीसङ्गमे तटे ॥५॥
सहोदरवधान्मुक्तः कश्चित् स्नानात्पुरा शृणु। हत्वा भ्रातृन्नृपो म्लेच्छो लोभादादौ ग्रहेद्धनम् ॥६॥
तत्पापैर्लेपितः कुष्ठी प्रजात्यक्तो विनिर्ययौ। विभ्रम्य मेदिनीं शश्वत्प्राप्तवांस्तत्र पार्थिवः ॥७॥
नारदस्य मुखाच्छ्रुत्वा सस्नौ तत्रैव भक्तितः। पौषशुक्लचतुर्दश्यां तज्जलस्पर्शनात्तनौ ॥८॥
कुष्ठादिभ्यो विनिर्मुक्तो योदिभ्स्तत्कृतसम्भवैः। एकसंवत्सरं यावत्तत्र सस्नौ स भक्तितः ॥९॥
विमानेन ययौ सोऽपि ततो मृते त्रिविष्टपम्। तत्र वर्द्धेश्वरं पूज्य सर्वदोषो विनश्यति ॥१०॥
गवां कोटिफलं प्राप्य रुद्रलोकं स गच्छति। खड्वुदकेश्वरतीर्थे कार्तिक्या पक्षयोर्द्वयोः ॥११॥
द्वितीयस्नानमात्रेण कालपाशैर्विमुच्यते। अल्पमृत्युहरे स्नात्वा सौभाग्यमतुलं लभेत् ॥१२॥
खड्वुदकेश्वरो पूज्यो महापापं विनश्यति। गवां शतफलं प्राप्य रुद्रलोके महीयते ॥१३॥
नासिकाम्बुमहातीर्थे स्नात्वा पौषे च पूर्णिमा। सप्तजन्मार्जितं पापं नश्यति स्नानमात्रतः ॥१४॥
पुष्येषु स्नानतः पापं नश्यति पूजनात्ततः। गवां शतफलं प्राप्य रुद्रलोकं स गच्छति ॥१५॥
अष्टाशीतिभगातीर्थे स्नात्वा चैव तु पौषयोः। त्रयोदश्यां दिने स्नात्वा भ्रूणहत्या विनश्यति ॥१६॥
दम्पत्योः स्नानमात्रेण महासौभाग्यवर्द्धनम्। कपिलाशतकं दत्वा फलं प्राप्नोति मानवः ॥१७॥
अष्टादशभुजां देवीं पूजयित्वा महाफलम्। जन्मान्तरस्थपापानि दर्शनाद् दहति ध्रुवम् ॥१८॥
मातृकाख्ये महातीर्थे स्नात्वा शतगवां फलम्। चतुर्दश्यां द्वयोः पौषे देवीपूजनमात्रतः ॥१९॥
महापातकं नश्यति संग्रामे विजयो भवेत्। राज्यमान्यादिकं भुक्त्वा सर्वलोकवशङ्करः ॥२०॥
एतत्फलं न संदेहो निश्चितन्तु मयाधुना। देव्यम्बिका प्रसादाद्वैदेवता सुप्रसीदति ॥२१॥
भैरवाख्ये महातीर्थे स्नात्वा तु पञ्चमीद्वये। विशिष्टा नवमी पौषे किल्विषादि विनश्यति ॥२२॥
भैरवपूजनेनैव सौभाग्यमतुलं लभेत्। वीरहत्यादिपापानि नश्यन्ति पूजनात् क्षणात् ॥२३॥
बलवान्फलवान् विज्ञो राज्यं प्राप्य धनान्वितः। अन्ते च पुत्रवान्धन्यो रुद्रलोके वसेत्सदा ॥२४॥
स्नात्वा मीनावतीतीर्थे आश्विने शुक्लकृष्णयोः। नवम्यां स्नानमात्रेण ब्रह्महत्यादि नश्यति ॥२५॥
जलजन्तुबधात्पापैर्नरजन्मनि चिह्नितम्। मृतबन्ध्यादिपञ्चानां दृष्ट्वा तु फलमश्नुते ॥२६॥
देवीपूजनमात्रेण नश्यति दहति क्षणात्। गवां शतफलं प्राप्य देबलोकं स गच्छति ॥२७॥
अम्बालिकामहातीर्थे नवम्यां आश्विनद्वयोः। स्नानं च विधिवत् कृत्वा श्रीसौभाग्य प्रवर्द्धते ॥२८॥

देव्याश्च पूजनेनैव धनवान् बलवान् भवेत्। दम्पत्योः स्नानमात्रेण कोटियज्ञफलं लभेत् ॥२९॥
वाणेश्वरो वाणगङ्गा तीर्थानां सङ्गमे युता। मधोर्द्वयचतुर्दश्यां स्नात्वा तु विधिना नरः ॥३०॥
बाणेश्वरः पूजनीय ऋणादाशु विमुच्यते। त्रीणि वर्षसहस्राणि स्वर्गे सायुज्यमाप्नुयात् ॥३१॥
दण्डपाणिमहातीर्थे स्नात्वा आश्विनपक्षयोः। त्रयोदश्यां पूजनीयो दण्डपाणिः प्रसीदति ॥३२॥
कृतानि पूर्वपापानि नश्यन्ति दहति ध्रुवम्। महापातककोटिश्च तत्क्षणादेव नश्यति ॥३३॥
गवां शतफलं प्राप्य रुद्रलोकं स गच्छति। वीथिकाख्ये महातीर्थे स्नात्वा शतगवां फलम् ॥३४॥
नवम्यां च द्वयोर्माघे देवलोके वसेत्सुखम्। सौभाग्यं सन्ततेर्वृद्धिर्जयलाभो भविष्यति ॥३५॥
मणिकुण्डमहातीर्थे स्नात्वा आश्विनपक्षयोः। द्वादश्यां स्नानमात्रेण सर्वपापैर्विमुच्यते ॥३६॥
मणिरूपेश्वरो पूज्यः कोटियज्ञफलं लभेत्। मयूराम्बिकयात्रा स्यात्कुण्डलाः पतिता भुवि ॥३७॥
ततोभवा महाकुण्डा मणिकुण्डा इति श्रुताः। तस्यां च स्नानमात्रेण अश्वमेधफलं लभेत् ॥३८॥
जन्मान्तरस्थपापानि नश्यन्ति स्नानमात्रतः। ज्ञानेशमयूरतीर्थे ज्येष्ठिला संगमादिषु ॥३९॥
त्रिवेणीसङ्गमे यच्च स्नानं तत् फलदायकम्। मातृकापूजने मात्रं फलं तस्य पदे पदे ॥४०॥
ज्येष्ठसितनवम्यां वा कृष्णाश्विन्यां चतुर्दशे। दिने संस्नाति यो भक्त्या तस्य पुण्यफलं शृणु ॥४१॥
अश्वमेधफलं प्राप्य उमालोके वसेत्सदा।श्रीचण्डीरावतीतीर्थे स्नानं च मधुमासके।
पक्षद्वयस्य पञ्चम्यां लक्ष्मीसन्ततिवर्द्धनम् ॥४२॥
लक्ष्म्या यः शिखरारूढः फलं तस्य पदे पदे। अश्वमेधशतं प्राप्य लक्ष्मीलोके गमिष्यति ॥४३॥
देवघट्टे महातीर्थे स्नानं कुर्यात् विधानतः। पूजां कुर्याद्विधानेन देवघट्टेश्वरस्ततः ॥४४॥
यः कुर्यादाश्विनमासे अष्टम्यां पक्षयोर्द्वयोः। नवम्यां च विशेषेण स्नात्वा भयात्प्रमुच्यते ॥४५॥
देवानां भयमुत्पन्नं धर्मदत्तेन भञ्जनात्। तद्दोषपरिहाराय देवघाट इतीरितः ॥४६॥
तत्तीर्थे चामराः स्नात्वा बभूवुर्निर्भयाः समे। सर्वशत्रुक्षयं कृत्वा महीयन्त हि स्वर्गके ॥४७॥
सर्वदेवार्चनं पुण्यं सर्वतीर्थार्चनं कृतम्। सर्वव्रतं कृतं तेन सर्वकर्म कृतं शुभम् ॥४८॥
तत्तीर्थं पूजनेनैव कोटितीर्थादि पूज्यते। तत्तीर्थे जपमात्रेण सर्वयज्ञफलं लभेत् ॥४९॥
ज्ञानेश्वरन्ततो गच्छेत्स्नानं कुर्याद्विधानतः। पञ्चामृतेन तान्पूज्य यथाविभवविस्तरैः ॥५०॥
ब्राह्मणान् भोजयेत्तत्र यथाविभवविस्तरैः। दक्षिणा च प्रदातव्या सम्पूर्णफलहेतवे ॥५१॥
ज्ञानभैरवपूजा च कुर्यात् विधिविधानतः। तत्रैव भोजनं कुर्यात् ईश्वरस्य प्रसादतः ॥५२॥
दशहरादिने स्नात्वा कोटियज्ञफलं लभेत्। ज्ञानेश्वरपूजनाच्च सर्वपापैर्विमुच्यते ॥५३॥
आश्विन्यां सितद्वादश्यां स्नात्वा चैव विशेषतः। गवां कोटिफलं प्राप्य रुद्रलोके महीयते ॥५४॥
तद्दिने भैरवे तीर्थे स्नानं कुर्यात् यथाविधि। तद्दिने ईश्वरं पूजेद् भक्तिश्रद्धानुसारतः ॥५५॥
कार्तिके सितद्वादश्यां स्नानार्चनादिकाञ् चरेत्। तस्य पुण्यप्रभावेण विद्या आयुर्यशो भवेत् ॥५६॥
नंशाभगवतीतीर्थे स्नानं कुर्यादतन्द्रितः। मात्रिकादर्शनैनैव अश्वमेधफलं लभेत् ॥५७॥
भ्रूणहत्यादिभिः पापैर्मुच्यते नात्र संशयः। शतगवां फलं प्राप्य लक्ष्मीलोकं स गच्छति ॥५८॥
स्नानं सरस्वतीतीर्थे माघस्य पञ्चमीतिथौ। स्नानं सिद्धिकरं देवि वाक्पवित्रकरं शुभम् ॥५९॥
शारदापूजनेनैव विद्याधनं लभेद्ध्रुवम्। कवित्वं राज्यमायुष्यं सरस्वत्याः प्रसादतः ॥६०॥
पर्शुगङ्गामहातीर्थे स्नात्वा चैव विशेषतः। क्रियादेवेश्वरः पूज्यः पार्वतीसहितो हरः ॥६१॥
भाद्रशुक्लतृतीया च भुक्तिमुक्तिफलप्रदा। वियोगः कान्तया यस्य यस्याश्च पतितः पुनः ॥६२॥
तद्योगं वाञ्छितं प्राप्य उभयोः प्रीतिवर्धनम्। दशतुलाफलं प्राप्य अश्वमेधफलं लभेत् ॥६३॥
सर्वव्रतफलं पुण्यं सर्वतीर्थफलप्रदम् ॥६४॥
कोरीवतीमहातीर्थे कृष्णचतुर्दशीतिथौ। कोरिवतीमहादेवपूजां कुर्याच्च आश्विने ॥६५॥
कल्पान्तकृतपापघ्नं तज्जलस्पर्शनं भवेत्। देवीपूजनमात्रेण कोटियज्ञफलं भवेत् ॥६६॥
पीठिकाख्ये महातीर्थे स्नात्वा शतगवां फलम्। चैत्रशुक्लचतुर्दश्यां पौर्णिमास्यां विशेषतः ॥६७॥
देवीपूजनमात्रेण मुच्यते सर्वपातकैः। सर्वबन्धाद् विमुच्येत देवीलोकं स गच्छति ॥६८॥
वीरावतीमहातीर्थे वीरद्रव्यापहारणे। वीरस्त्रीगमने पापं नश्यति स्नानमात्रतः ॥६९॥
मेषराशौ स्थिते सूर्ये तद्दिने स्नापयेत्सुधीः। वीरार्चनादिकं कृत्वा महावीरपराक्रमः ॥७०॥

पृथ्वीवराहतीर्थे च त्रयोदश्यां हि माघवे। विधिवत्स्नानमात्रेण कोटियज्ञफलं लभेत् ॥७१॥
वराहपूजनं कृत्वा तस्य पुण्यफलं शृणु। पदे पदेऽश्वमेधानां विष्णुलोकं स गच्छति ॥७२॥
कन्यावति महातीर्थे स्नात्वा पापैर्विमुच्यते। मार्गकृष्णत्रयोदश्यां स याति परमां गतिम् ॥७३॥
विधवास्त्री क्रियात्पूजा पुण्यासौभागिनी भवेत्। सुन्दरी सा पतिप्रेमा भवेज्जन्मनि जन्मनि ॥७४॥
तारावतीमहातीर्थे तारादेवं प्रपूजयेत्। मार्गशुक्लत्रयोदश्यां स्नानात्पापैर्विमुच्यते ॥७५॥
पापाद्वैधव्यमाप्नोति पुण्यात् सौभागिनी भवेत्। सुन्दरी सा पतिप्रेमा भवेज्जन्मनि जन्मनि ॥७६॥
चन्द्रावतीमहातीर्थे पूज्य चन्द्रावतेश्वरम्। यो नरः स्नायते सौम्यां पूर्णिमायां विशेषतः ॥७७॥
सर्वपापैर्विनिर्मुक्तः शिवलोकं स गच्छति। दशाश्वमेधजं प्राप्य पुनर्जन्म न विद्यते ॥७८॥
पीठाम्बिका पूजनीया महापापैर्विमुच्यते ॥७९॥
अग्निवैश्वानरो तीर्थे स्नात्वा देवो महेश्वरः ॥८०॥
अग्निवैश्वानरे पूज्यो ज्येष्ठशुक्लतृतीयके। शताश्वमेधजं पुण्यं वाजपेयभवं तथा ॥८१॥
देवतापूजनेनैव रुद्रलोकं स गच्छति। दशाश्वमेधतीर्थानां स्नानात्पुण्यफलं शृणु ॥८२॥
दशाश्वमेधदेवस्य पूजां यः कुरुते नरः। दशजन्मार्जितं पापं नश्यति नात्र संशयः ॥८३॥
गवां कोटिफलं प्राप्य शिवलोकं प्रयास्यति। विष्णुधारामहातीर्थे यो नरः स्नायते यदि।
सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥८४॥
चन्द्रावतीमहातीर्थे श्रावण्यां स्नानदानतः। एकादश्यां विशेषेण महापापं विनश्यति ॥८५॥
ब्रह्माम्बुनि महातीर्थे श्रावणे द्वादशीतिथौ। स्नात्वा पापाद्विमुच्येत ब्रह्मलोकं स गच्छति ॥८६॥
नवलिङ्गमहातीर्थे वैशाख्यां स्नानदानतः। नवजन्मार्जितं पापं नश्यति नात्र संशयः ॥
नवलिङ्गेश्वरो पूज्यः शिवलोकमवाप्स्यसि ॥८७॥
तुलजाम्बामहातीर्थे स्नात्वा चतुर्दशीदिने। सर्वपापविनिर्मुक्तो सर्वकामस्य भाजनम्।
गवां शतफलं प्राप्य देवीलोकं स गच्छति। देवानामर्चको भूत्वा श्रीदेव्या सह मोदते ॥८८॥
कालावतीमहातीर्थे पूर्णिमायां च स्नानतः। एकादश्यां च वैशाखे गवां शतफलं लभेत् ॥९०॥
कामधेनुमहातीर्थे स्नात्वा च अष्टमीदिने। माधवस्य चतुर्दश्यां स्नात्वा चैव विशेषतः ॥९१॥
गवां शतफलं प्राप्य मृतसञ्जीवितो भवेत् ।शताश्वमेधं संप्राप्य विष्णुलोकं स गच्छति ॥९२॥
भुजगशयने तीर्थे स्नात्वा कृत्वा च पूजनम्। पद्मनाभेः प्रसादाच्च जन्ममृत्युर्न विद्यते ॥९३॥
विश्वमतीमहातीर्थे स्नानं च जयकांक्षया। ब्रह्महत्यादिपापानि नश्यन्ति स्मरणात्ततः ॥९४॥
ब्रह्मगङ्गामहातीर्थे यः स्नानं कुरुते नरः। शतजन्मार्जितं पापं नश्यति पूजनात्ततः ॥९५॥
मेषशुक्लचतुर्दश्यां षष्ठ्यां च ज्येष्ठशुक्लके। स्नानात् पापक्षयं कृत्वा ब्रह्मलोकं स गच्छति ॥९६॥
संसारसागरे मग्नजनोपकारहेतवे। ज्ञानवित्तानुसारेण प्रकाशः क्रियतेऽधुना ॥९७॥
॥ इति रुद्रावतीतीर्थयात्रा समाप्ता ॥८३॥

६. नीलकण्ठयात्राविधिः

(यस शीर्षकमा गोसाईंकुण्ड तीर्थमा यात्रा गर्ने विधि बताउनुका साथै नीलकण्ठ तीर्थको महिमा पनि बताइएको छ। नीलकण्ठ यात्रा कठिन यात्रा हो भनी त्यस यात्रामा जाँदा पाइला पाइलामा महापुण्य प्राप्त हुने तथ्य यसमा निरूपण गरिएको छ।)

श्रीनीलकण्ठाय नमः।

श्रीदेव्युवाच

देवदेव महादेव भक्तानामभयप्रद। नीलकण्ठस्य यात्राया विधिं ब्रूहि महेश्वर ॥१॥
श्रूयते भगवन् शम्भो नीलकण्ठह्रदः शुभः। कुत्र तिष्ठति तद् ब्रूहि माहात्म्यं वद मे विभो ॥२॥

महेश्वर उवाच

देवैश्च दानवश्चैव समुद्रमथनं कृतम्। तत्रोत्पन्नं मया देवि विषं त्रैलोक्यतापदम् ॥३॥
भक्षितं लोकरक्षार्थं पुरा पर्वतकन्यके। तस्य दाहपरीताङ्गो भ्रमँल्लोकं चराचरम् ॥४॥
ततो हिमगिरेः पादं भित्वा शूलेन वै मया। उत्पादिता सरिच्छ्रेष्ठा शूलगङ्गेति विश्रुता ॥५॥
शूलगङ्गाजले स्नानं कुर्वतात्र स्थितं मया। स ह्रदो नीलकण्ठाख्यो नैपालस्योत्तरे स्थितः ॥६॥

यत्र स्नात्वा नरो लोके सर्वतीर्थावगाहनम्। प्राप्नोति क्षेत्रमाहात्म्यद्देवदेवप्रसादतः ॥७॥
एकदा न कृता येन यात्रा रुद्रह्रदं प्रति। पृथिव्यामटनं तस्य निष्फलं स्यान्न संशयः ॥८॥
तस्माद्यात्रा प्रयत्नेन कर्त्तव्या तद्ध्रदस्य वै। वेत्रगङ्गाजलं प्राश्य सङ्कल्पनियतो व्रजेत् ॥९॥
नत्वा त्रिशूलगङ्गाञ्च त्रिशूलगिरिमारुहेत्। पर्वतञ्च नमस्कृत्य सदाशिवमनामयम् ॥१०॥
त्रिशूलगिरिमाक्रम्य सर्वपापैः प्रमुच्यते। सर्वतीर्थजलावास देवर्षिगणसेवित ॥११॥
दर्शनेन शिवाधार पुनीहि सर्वकामद। करणं कारणं कर्त्ता सदानन्द सनातन ॥१२॥
निरञ्जन जगद्धामन् नीलकण्ठ नमोस्तु ते ॥१३॥
यं देवविद्याधरसिद्धसङ्घा गन्धर्वयक्षोरगकिन्नराश्च। दृष्ट्वासरो नीलपयोदकण्ठं संसारपङ्के न पुनः पतन्ति ॥१४॥
नीलकण्ठं ततो दृष्ट्वा त्रिवारञ्च पुनः पुनः। म्रियते यत्र कुत्रापि शिवलोकं स गच्छति ॥१५॥
मनसा कर्मणा वाचा सप्तजन्मसु किल्विषम्। कृतं तद्विलयं याति नीलकण्ठस्य दर्शनात् ॥१६॥
जन्मान्तरसहस्रेषु पीड्यन्ते पापकर्म्मणा। नीलकण्ठञ्च तं दृष्ट्वा भस्म पापं न संशयः ॥१७॥
ध्यायन्तो मनसा लोका ये गच्छन्ति हिमालयम्। सप्तजन्मकृतं पापं तेषां नश्यति तत्क्षणात् ॥१८॥
मनुष्यजन्म प्राप्यापि यैर्न स्नानं कृतं ह्रदे। तेषां तज्जन्म विफलं यातं नास्त्यत्र संशयः ॥१९॥
धिक्तस्य पितरं लोके धिक्तस्य जननीं पुनः। येनाम्बिके सकृदपि नीलकण्ठो न पूजितः ॥२०॥
किं तस्य दानैर्जपहोमतीर्थैः किं तस्य नागैर्वरवाजिराजैः।
सुश्रद्धया रुद्रसरः स्वसन्निधौ न सेवितं येन वृथास्य जीवनम् ॥२१॥
पर्वतारोहरणं कृत्वा भैरवोऽग्रे तु दृश्यते। द्वारस्थो द्वारपालश्च लगुडादिविनायकः ॥२२॥
तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते। नीलकण्ठप्रभावेण देहकष्टञ्च शोषणम् ॥२३॥
देहकार्श्यं तृषा श्वासो हृद्रोगो गात्रवेपथुः। शिरोरुग्विषपुष्पाणां गन्धेन नयनभ्रमिः ॥२४॥
निद्रा तन्द्रा च मूर्च्छा च पश्चात्तापोऽपि जायते। भूतानां पापचिह्नानि सर्वाण्येतानि पार्वति ॥२५॥
एवं कष्टेन यो देवि गच्छेद्रुद्रह्रदं प्रति। नीलशैलगते हिमपीठे श्रमश्च जायते ॥२६॥
पदे पदे महापुण्यं सर्वयज्ञसमुद्भवम्। महापथप्रवृत्तानां नीलकण्ठस्य यात्रिणाम् ॥२७॥
यत्र कुण्डञ्च दृष्ट्वा तु शूलगङ्गासमुद्भवम्। भैरवस्य च कुण्डञ्च तथा वाण्याश्च कुण्डकम् ॥२८॥
हर्षः पितृषु देवेषु स्ववंशेषु च जायते। सर्वतीर्थानि तत्रैव श्रावणीपूर्णिमादिने ॥२९॥
दशम्याद्यासु तिथिषु सर्वतीर्थसमागमः। स्नानं ध्यानं जपः पाठः पूजनं तर्पणाहुती ॥३०॥
पञ्चामृतं शतरुद्रीं शिवनामजपन्तथा। श्राद्धं कृत्वा च तत्तीर्थे नीलकण्ठस्तवं तथा ॥३१॥
भवन्ति पितरस्तुष्टा न संख्या चोपपद्यते। नित्यं वै पुष्करं तत्र प्रयागं च पृथूदकम् ॥३२॥
प्रभासं च कुरुक्षेत्रं वराहतीर्थमेव च। काशी च देवतीर्थञ्च नैमिषञ्चैव कौशिकी ॥३३॥
गयाद्यानि च तीर्थानि गङ्गाद्याः सरितस्तथा। अयोध्यादिपुरः सप्त भूर्भुवस्स्वरिमेऽखिलाः ॥३४॥
वेदादिसर्वशास्त्राणि पुराणानि तथागमाः। निवसन्तीह तीर्थानि नीलकण्ठस्य तज्जले ॥३५॥
ब्रह्माद्याः देवताः सर्वाः श्रावण्यां पुण्यपर्वणि। स्नातुमायान्ति तत्तीर्थे नीलकण्ठह्रदोत्तमे ॥३६॥
होमञ्जपञ्च कुर्वन्ति ध्यानं पाठञ्च पूजनम्। आतिथ्यं गीतवाद्यञ्च कथाश्रवणवाचनम् ॥३७॥
दीपदानञ्च कर्त्तव्यं परञ्ज्योतिरवाप्यते। ताम्रस्य भाजनं कृत्वा तम्मध्ये दीपवर्त्तिकाम् ॥३८॥
गोघृतेन समायुक्तां प्रज्वाल्य तद्ध्रदेऽर्प्पयेत्। रूपवान् धनवान् भूत्वा न तामिस्रे विशेत्पुनः ॥३९॥
रुद्रायुधं सुवर्णादिनिर्मितं यो निवेदयेत्। तेन दानेन लभते शिवलोकं सुखास्पदम् ॥४०॥
स्वर्णरौप्यादिकं किञ्चिद्यो ह्रदेऽर्पयते मुदा। न दरिद्रो भवेत् क्वापि चान्ते सद्गतिमाप्नुयात् ॥४१॥
मद्ध्रदे श्रद्धया वस्त्रं यः क्षिपेन्मम तुष्टये। तन्तूनां यावती सङ्ख्या तावद्देवपुरे वसेत् ॥४२॥
यद्यत्प्रक्षिप्यते वस्तु नीलकण्ठह्रदे मुदा। तत्तन्मया वरारोहे गृह्यते श्रद्धया यदि ॥४३॥
अश्रद्धयार्पितं किञ्चिन्न गृह्णामि गिरीन्द्रजे। नैवेद्यैर्विविधैर्धूपैः पुष्पैर्दीपैर्विलेपनैः ॥४४॥
गीतवाद्यादिस्तोत्राद्यैर्नीलकण्ठह्रदेऽम्बिके। करोति मानवो यस्तु पूजां भक्तिपरायणः ॥४५॥
कल्पकोटिसहस्राणि स वसेन्मम सन्निधौ। मुक्तिं प्रयाति मनुजः पुनरावृत्तिवर्ज्जितः ॥४६॥
पितरस्तस्य तृप्यन्ति कल्पकोटिशतावधि। पञ्चाक्षरीं महाविद्यां यो जपेद्ध्रदसन्निधौ ॥४७॥
महापापी विशुद्ध्येत चान्ते गच्छेच्छिवालयम्। वैभवं वाथवा मन्त्री यो जपेन्मद्ध्रदेऽम्बिके ॥४८॥

सर्वपापैर्विनिर्मुक्तः शिवलोकं स गच्छति। महिमा वेत्रगङ्गायास्त्रिवेण्याश्च विशेषतः ॥४९॥
तत्र स्नानं च कर्तव्यं चातीव फलदं शिवे। नीलकण्ठह्रदे स्नानं दुर्ल्लभं त्रिदिवौकसाम् ॥५०॥
इतरेषाञ्च जन्तूनां का कथा नगनन्दिनि। अन्यतीर्थाभिगमने श्रमो नैतादृशो भवेत् ॥५१॥
यथैतत्तीर्थगमने भवेज्जन्तोर्विशेषतः। यस्मिन्नस्ति महेशस्य कृपा भाग्यसमन्विता ॥५२॥
तस्यैव जायते बुद्धिर्नीलकण्ठस्य दर्शने। मद्द्वेषी केशवद्वेषी त्वद्द्वेषी नगनन्दिनि ॥५३॥
मनो न जायते तस्य नीलकण्ठह्रदार्च्चने। दुर्ल्लभं सर्वतीर्थेषु नीलकण्ठावगाहनम् ॥५४॥
मद्भक्त्या प्राप्यते देवि नीलकण्ठावगाहनम्। जटाजूटसमायुक्तं चन्द्रार्द्धकृतशेखरम् ॥५५॥
नीलकण्ठं वृषारूढं शूलपाणिं महाबलम्। देवदेवं सुरश्रेष्ठं सर्वाभरणभूषितम् ॥५६॥
चन्दनैर्लिप्तदेहञ्च दिव्यवस्त्रैरलंकृतम्। नीलकण्ठं महादीप्तिं सूर्यकोटिसमप्रभम् ॥५७॥
दशभुजं त्रिनेत्रञ्च सर्वरत्नैः शुशोभितम्। कपालमालिनञ्चैकपञ्चवक्त्रं महेश्वरम् ॥५८॥
पिनाकिनं शूलपाणिं देवदेवं जगद्गुरुम्। जिह्वाग्रे वेदनिचयं हृदयस्थजगत्त्रयम् ॥५९॥
रोमकूपस्थसिद्धर्षिं सर्वदेवाश्रितांघ्रिकम्। सप्तपातालपादञ्च व्योमकेशं त्रिलोचनम् ॥६०॥
नमामि नीलकण्ठं तं सर्वपापहरं हरम्। एवं स्तुत्वा महादेवं सर्वपापैः प्रमुच्यते ॥६१॥
विराजते नीलकण्ठो हिमालयसरोवरे। तत्रैव च सुराः सर्वे तिष्ठन्ति सुरयोषितः ॥६२॥
ब्रह्मा विष्णुश्च शक्राद्याः सभायां तत्र संस्थिताः। शङ्खदुन्दुभिनिर्घोषैः काहालैर्भेरिमर्दलैः ॥६३॥
पटहैस्तालवीणाद्यैर्वादित्रैर्बहुसुस्वरैः। ब्रह्मा विष्णुश्च रुद्राश्च आदित्याश्च मरुद्गणाः ॥६४॥
गन्धर्वा लोकपालाश्च सिद्धगुह्यककिन्नराः। अणिमादिगुणैर्युक्ता ये चान्ये तत्त्वदर्शिनः ॥६५॥
सावित्रीपार्वतीलक्ष्मीशचीमेनादयस्तथा। सर्वास्ता देवपत्न्यश्च सर्वाश्चैव पतिव्रताः ॥६६॥
एते वै देवसङ्घाश्च मम दर्शनकांक्षिणः। तिष्ठन्ति परितो देवि नीलकण्ठस्य वै ह्रदे ॥६७॥
स्वर्णभारसहस्राणां कुरुक्षेत्रे रविग्रहे। तत्फलं लभते देवि नीलकण्ठस्य दर्शनात् ॥६८॥
अन्तकाले महामोक्षं लभते नात्र संशयः ॥६९॥

महेश्वर उवाच

माहात्म्यं शृणुते यस्तु नीलकण्ठस्य वै शिवे। तस्य रुद्रपुरे वासः सर्वान्कामानवाप्नुयात् ॥७०॥
॥ इति श्रीस्कन्दपुराणे उत्तरखण्डे शिवमाहात्म्ये नीलकण्ठमहिमा ॥

इति तीर्थप्रकरणम्

# अथ शक्तिप्रकरणम्

## १. श्री ५ रणबहादुरसाहविरचितं जगदम्बाष्टकम्

(यस जगदम्बाष्टकका रचयिता श्री ५ रणबहादुर शाह हुन्। उनले शक्तिप्रतिको आफ्नो अपार भक्ति यस जगदम्बाष्टक स्तवकाव्यमा व्यक्त गरेका छन्। योगी नरहरिनाथज्यूले यो स्तोत्र चक्रपाणिका सन्तान पद्मनाभकेशरी शर्मा अर्ज्यालको सौजन्यबाट प्राप्त गर्नुभएको थियो।)

श्रीभवान्यै नमः

शरणं करवाणि कालिके ते चरणौ विश्वजनैर्नुतौ पतौ तौ।
जलमध्यनिविष्टभूमिधारौ जगदम्बे परिपाहि मत्सदृक्षम् ॥१॥
विकरालसुरारिघातदक्षे निजनाथानुलपेतिहर्षरूपे।
भवभीतिकुठारिके परेशे जगदम्बे परिपाहि मत्सदृक्षम् ॥२॥
सुररागनिपानशोभदष्टे चलजिह्वे विशकलवक्त्रशोभे।
असिपाशवराभयादिमुक्ते जगदम्बे परिपाहि मत्सदृक्षम् ॥३॥
भवपाशनिविष्टजानपाले करुणाशालिकपालिभागधेये।
शरणागतवत्सले सुरूपे जगदम्बे परिपाहि मत्सदृक्षम् ॥४॥
महिषासुररक्तयुक्तवक्त्रे दनुजान्त्रेणविशोभिवक्षदेशे।

जडभूतपिशाचगायमाने जगदम्बे परिपाहि मत्सदृक्षम् ॥५॥
मधुपूर्णचषेन युक्तहस्ते रवपानेन क्षताक्षतायमाने।
सुरनारदतुंबुरादिगाते जगदम्बे परिपाहिमत्सदृक्षम् ६
सुररक्तजले मांसभक्षणभूवासपरे शिरोविभूषे
अतिघोरपिशाचिनीपरीते जगदम्बे परिपाहि मत्सदृक्षम् ॥७॥
नवमेघसमानकान्तियुक्ते जलदङ्गारचयैकनेत्रशोभे।
जठरेतिकृशेतिदीर्घरूपे जगदम्बे परिपाहि मत्सदृक्षम् ॥८॥
रणपूर्ववहादुरो नृपालश्चरणौ संशरणीकरोति ते।
अरिरोगभयादिनाशदक्षौ जगदानन्दकरौ द्विषत्सुधोणौ ॥९॥

॥ इति जगदम्बाष्टकम् ॥

॥ शुभम् ॥

(चक्रपाणिसन्ततेः पद्मनाभशरिशर्म्मार्ज्यालसौजन्यादुपलब्धम्)

२. मनःकामनास्तुतिः

(गोर्खा जिल्लामा रहेको मनकामना मन्दिर सिद्ध धामका रूपमा प्रसिद्ध छ। यस शीर्षक अन्तर्गत उनै सिद्धिदायिनी भगवती मनकामनाको स्तुति गरिएको छ।)

॥ ॐ नमो मनःकामनायै ॥

मनःकामनां सन्ततानां ददाना मनःकामनेति प्रसिद्धा ततस्त्वम्।
मनःकामनां पूरयन्तीं जनानां मनःकामनामम्बिकां त्वां नमामि ॥१॥
जगत्पावनी जन्हुकन्या त्वमेव जगन्मोहिनी विष्णुमायासि देवी।
जगज्जीविनी वृत्तिरूपा त्वमेव जगत्पोषिणी त्वं जनित्री जनानाम् ॥२॥
जगद्धारिणी या स्थिरा सा त्वमेव जगत्पोषिणी मेघपुष्पस्वरूपा।
जगन्मङ्गला मङ्गलानान्निदानं जगत्कारणं कारणेषु प्रधानम् ॥३॥
महीपालगेहैकलक्ष्मीस्त्वमेव महीपालराज्योदये हेतुभूता।
महीपालराज्यच्युतौ हेतुभूता महीपालसेव्या त्वमेवासि मातः ॥४॥
विपद्ग्रामदावानलोच्छेदहेतुः पदाम्भोजयुग्मस्मृतिस्तावकीना।
अतो ये स्मरन्ति प्रयाणे क्षितीशा न तेषां विपक्षोद्भवा भीतिरुग्रा ॥५॥
नृपाभीष्टदानान्मनःकामनेति मदीयाभिधानं कृतार्थं किलेति।
न वाच्यं भवानि द्विजानां समीहा त्वया पूरणीयानुकम्पां विधाय ॥६॥
कपर्द्दी विरक्तोऽनुरक्ते न रक्तो रमेशो रमायाम्प्रसक्तः शयालुः।
दयालू रमा न श्रुता न त्वदन्यं शरण्यं न जाने न जाने न जाने ॥७॥
तव चरणसरोजं सेवते कल्पवृक्षं जननि यदि मनुष्यो दुर्ल्लभन्नैव किञ्चित्।
विविधविषयभोगान्संविधायाङ्गनाभिरिह वसति तदन्ते याति तद्धाम नाम ॥८॥
सर्वलोकवशकारणशक्तिरस्ति यादभुततमा वनितानाम्।
सा त्वमेव नगराजसुते यत्सेश्वरा अपि सुरा वशभाजः ॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद् भवेद्। तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥९॥

॥ इति श्रीमनःकामनास्तुतिः सम्पूर्णा ॥

३. त्रिपुरसुन्दरीस्तुतिः

(नेपालका अनेक जिल्लाहरूमा भगवती त्रिपुरसुन्दरीका मन्दिरहरू रहेका छन्। नेपाली जनजीवनले प्राचीनकालदेखि नै भगवती त्रिपुरसुन्दरी अथवा षोडशीको आराधना गर्ने गरेको तथ्यलाई ती मन्दिरहरूले प्रमाणित गर्दछन्। यहाँ उनै त्रिपुरसुन्दरी भगवतीको स्तुति प्रस्तुत गरिएको छ।)

॥ श्रीत्रिपुरसुन्दर्यै नमः ॥

कैलासे करुणाक्रान्ता परोपकृतिमानसा। पप्रच्छ करुणासिन्धुं सुप्रसन्नं महेश्वरम् ॥१॥

महेश्वर उवाच

शृणु देवि प्रवक्ष्यामि तव स्नेहान्महेश्वरि। दुर्लभं त्रिषु लोकेषु सुन्दरीहृदयस्तवम् ॥
ये नराः दुःखसन्तप्ता दारिद्र्यहतमानसाः। अस्यैव पाठमात्रेण तेषां श्रेयो भविष्यति ॥२॥

ॐ अस्य श्रीमहाषोडशीहृदयस्तोत्रमन्त्रस्य आनन्दभैरवऋषिः। दैवी गायत्रीच्छन्दः। श्रीमहात्रिपुरसुन्दरी देवता। ऐं बीजं। सौः शक्तिः क्लीं कीलकं। धर्मार्थकाममोक्षार्थे विनियोगः। आनन्दभैरवऋषये नमः शिरसि। दैवी गायत्रीच्छन्दसे नमो मुखे। श्रीमहात्रिपुरसुन्दरीदेवतायै नमो हृदि। ऐं बीजाय नमो नाभौ। सौःशक्तये नमःस्वाधिष्ठाने। क्लीं कीलकाय नमो मूलाधारे। धर्मार्थकाममोक्षार्थे विनियोगः पादयोः। अथ कराङ्गन्यासौ। ऐं ह्रीं क्लीं अंगुष्ठाभ्यां नमः। क्लीं श्रीं सौः ऐं तर्जनीभ्यां स्वाहा। सौः ॐ ह्रीं श्रीं मध्यमाभ्यां वषट्। सौः सौ ऐं क्लीं ऐंकरा ह्रीं हसकल कनिष्ठाभ्यां वौषट्। सौः सौ ऐं क्लीं ह्रीं श्रीं करतलकरपृष्ठाभ्यां फट्। एवमङ्गन्यासः।

अथ ध्यानम्

बालव्यक्तविभाकरामितनिभां भव्यप्रदां भारती-
मीषत्फुल्लमुखाम्बुजां स्मितकरैराशाभवाब्धापहाम्।
पाशं साभयमंकुशं च वरदं संविभ्रतीं भूतिदाम्।
भ्राजन्तीञ्चतुरम्बुजाकृतिकरैर्भक्त्या भजे षोडशीम् ॥५॥
सुन्दरी सकलकल्मषापहा कोटिकञ्जप्रियकाम्यकान्तिका।
कोटिकल्पकृतपुण्यकर्मणा पूजनीयपदपुण्यपुष्करा ॥६॥
शर्वरीशसमसुन्दरानना श्रीशशक्तिसुकृताश्रयस्थिता।
सज्जनानुशरणीयसत्पदा सङ्कटे सुरगणैः सुवन्दिता ॥७॥
यासुरासुररणे जयान्विता आजघान जगदम्बिकाजिता।
सज्जनानुशरणीयसत्पदा युद्धयुक्तदितिजासुदुर्जयात् ॥८॥
योगिनां हृदयसङ्गतां शिवां योगयुक्तमनसा यतात्मनाम्।
जाग्रतीञ्जपति यत्नतो द्विजा याञ्जपन्ति हृदि तां भजाम्यहम् ॥९॥
कल्पकास्तु कलयन्ति कालिकां यत्कलां कलिजनोपकारिकाम्।
कौलिकालिकलिताङ्घ्रिकञ्जकां तां भजामि कलिकल्पषामहाम् ॥१०॥
बालार्कानन्तशोचिर्निजतनुकिरणैर्दीपयन्तीं दिगन्तान्।
दीप्तैर्देदीप्यमानां दलितदितिसुतानल्पदावानलाभाम्।
दान्तोदन्तोग्रचिन्तान्दलितदितिसुतान्दर्शनीयान्दुरन्तान्
देवीन्दीनार्द्रचित्तां हृदि मुदितमनाः षोडशीं संस्मरामि ॥११॥
धीरान्धन्यान्धरित्रीधवविधृतशिरोधूतधूल्यब्जपादां
धृष्टान्धाराधरौघविनिधृतचपलाचारुचन्द्रप्रभाभां
धर्म्यान्धूतोपहारान्धरणिसुरधवोद्धारिणीन्ध्येयरूपां
धीमद्धन्यातिधन्यान्धनदधनवृतां सुन्दरींचिन्तयामि ॥१२॥
जयतु जयतु जाल्पा योगिनी योगयुक्ता जयतु जयतु सौम्या सुन्दरी सुन्दरास्या।
जयतु जयतु पद्मा पद्मिनी केशवस्य जयतु जयतु काली कालिनी कालकान्ता ॥१३॥
जयतु जयतु खर्वा षोडशी वेदहस्ता जयतु जयतु धात्री धर्मिणी धातृशान्तिः।
जयतु जयतु वाणी ब्रह्मणो ब्रह्मवन्द्या जयतु जयतु दुर्गा दारिणी देवशत्रोः ॥१४॥
देवि त्वं सृष्टिकाले कमलभवभृता राजसी रक्तरूपा
रक्षाकाले त्वमम्बा हरिहृदयधृता सात्त्विकी श्वेतरूपा
भूरिक्रोधा भवान्ते भवभवनगता तामसी कृष्णरूपा

एताश्चान्यास्त्वमेव क्षितिमनुजमता सुन्दरी केवलाद्या ॥१५॥
सुमलशमनमेतद् देवि गोप्यङ्गुणज्ञे ग्रहणमननयोग्यं षोडशीयं खलघ्नम्।
सुरतरुसमशीलं संप्रदं पाठकानां प्रभवति हृदयाख्यं स्तोत्रमत्यन्तमान्यम् ॥१६॥
इदं त्रिपुरसुन्दर्याः षोडश्याः परगाद्भुतम्। यः शृणोति नरः स्तोत्रं स सदा शुभमश्नुते ॥१७॥
न शूद्राय प्रदातव्यं सदा कलुषितात्मने देयं दान्ताय भक्ताय ब्राह्मणाय विशेषतः ॥१८॥

॥ इति श्रीत्रिपुरसुन्दरीषोडशीहृदयस्तोत्रम् ॥

४. अथ कङ्कालिकास्तोत्रप्रारम्भः

**(भगवती कालीका अनेक भेदमध्ये एउटा भेद कंकालिका पनि हो। उनै कङ्कालिकालाई अहिले नेपालीहरू कलंकी भगवतीका नामबाट आराधना गर्दछन्। उहाँ आफ्ना भक्तहरूलाई भोग र मोक्ष दिन समर्थ हुनुहुन्छ। उहाँको यस्तो महिमा बताउने यो स्तोत्र भयहरणाचार्य काण्डपाल कविद्वारा रचित कंकालिकास्तोत्रबाट उद्धृत गरिएको हो।)**

॥ श्रीकङ्कालिकायै नमः ॥

श्रीभयहरणो नाम ब्राह्मणः कविसत्तमः। दरिद्रो धनभूकामस्तुष्टाव परमेश्वरीम् ॥१॥
त्रिवृद् ब्रह्म परं धाम संस्मृत्य तदनुग्रहात्। प्रभजामि महामायां गजूरिनगवासिनीम् ॥२॥
जलधिराजजामद्रिराजजाममरराजजामादिराजिताम्। मनसि यः स्मरेत्त्वामवेदिता मखिलमातरं सोधिराजिताम् ॥३॥
ब्रविम सेवितं पादपङ्कजं कलिजपापहं विश्ववन्दितम्। तव तु यः स्मरेदत्र वा भजेन्नरवरः सदा भूरिवित्तवान् ॥४॥
वदनपङ्कजं विश्वसुन्दरं ह्यसुरदेवतानङ्गवर्धनम्। कविभिरीडितं विश्वमङ्गलं तव तु यः स्मरेत् सोऽतिपण्डितः ॥५॥
नयनपङ्कजं विश्वदीपकं ह्यसुरदेवतादर्शनीयकम्। दिव्यतडित्सु सौदामिनीसमं तव तु यः स्मेरत् सोऽतिशोभनः ॥६॥
करसरोरुहं देवकामदं विवुधदुर्लभं भक्तपूजितम्। त्रिविधधामदं वैरिनाशकं तव तु यः स्मरेत् सोऽतिध्वंसकः ॥७॥
हृदयपङ्कजं नाभिपङ्कजं श्रवणनासिकं भालमण्डलम्। त्रिविधदेवताकारशोभितं तव तु यः स्मरेत्सोऽतिपौरुषः ॥८॥
वदनपङ्कजं हस्तपङ्कजं नयनपङ्कजं पादपङ्कजम्। मनसि यः स्मरेन्नैव देवि ते विगतपौरुषः सोऽतिभस्मसात् ॥९॥
ब्रविम धामतो विन्ध्यशैलगामखिलदेहिनामन्तरात्मगाम्। सजुरिशैलगां विन्ध्यशैलतो मनसि यश्च त्वां सोऽतिनिर्मलः ॥१०॥
सृजसि पासि भो हंसि देवि त्वं सकललोकमाक्रम्य वै क्रमात्। त्रिविधनामभिस्तैश्च स्वैर्गुणैः जगति भासि त्वं मातरीश्वरी ॥११॥
विवुधतृप्तये स्वाहदेवि त्वं जननि त्वं स्वधा पितृतृप्तये। व्रविम तृप्तये यज्ञकर्मणि त्वमसि दक्षिणैकापि त्रैविधा ॥१२॥
अवहि देवि मामाशु बान्धवात्प्रचुरसङ्कटात्चौरतोऽग्नितः। नृपत एव कङ्कालि बालकं शरणमागतं त्वामधीश्वरीम् ॥१३॥
जलदमारुताद्वैद्युतानलादखिलशत्रुतो राजतो भयात्। जलत एव वा चाधिव्याधितः सकलशास्त्रतो वैरिसंमुखे ॥१४॥
अवहि देवि मां कालदण्डतो जननि दुर्गणाद् भूमिसंभवात्। भृगुत एव वाचाररोगतो नयनमध्यगे तोयशायिनः ॥१५॥
अपि सुबान्धवा धर्मबुद्धयो रिपव एव वा सन्ति वा न वा। सुहृद एव वा धर्मबुद्धय स्त्वमत एव तान्देवि चिन्तय ॥१६॥
नमो देव्यै महादेव्यै शिवायै सततं नमः। नमस्ते स्मृतिरुपिण्यै श्रद्धायै च नमो नमः ॥१७॥
लज्जायै च महालक्ष्म्यै राजलक्ष्म्यै नमोस्तु ते। क्षुधायै सततं बुद्ध्यै पुष्ट्यै तुष्ट्यै नमो नमः ॥१८॥
दयायै सततं कान्त्यै शान्त्यै कृत्यै नमोस्तु ते। मोहिन्यै चेतनायै च क्षान्त्यै भ्रान्त्यै नमो नमः ॥१९॥
निद्रायै चानवद्यायै विद्यायै च नमोऽस्तु ते। छायायै चान्नपूर्णायै सौदामिन्यै नमो नमः ॥२०॥
मेधायै च स्वधायै ते स्वाहायै च नमो नमः। नमस्ते ब्रह्मगायत्र्यै सावित्र्यै च नमो नमः ॥२१॥
दुर्गायै दुर्गभङ्गायै गौर्यै धात्र्यै नमो नमः। कालरात्र्यै महारात्र्यै चाच्युतायै नमो नमः ॥२२॥
इत्येतैः स्तुतिभिर्दिव्यैः स्तुता विप्रेण धीमता। प्रसन्ना खलु सा देवी वरं स्वप्ने ददौ शुभम् ॥२३॥
स्तोत्रे शक्तिञ्च तेजश्च निधाय पुनरेव सा। बभूवान्तर्हिता सद्यो विप्रस्य पश्यतस्ततः ॥२४॥
स्तोत्रमेतन्नरो नित्यं प्रातरुत्थाय यः पठेत्। नारी वापि लभेत् सद्यो वाञ्छितं फलमेव हि ॥२५॥

॥ इति श्रीभयहरणाचार्यकाण्डपालकविविरचितं कङ्कालिकास्तोत्रं सम्पूर्णं शुभम् ॥

५. अथ षोडशीध्यानम्

(भगवती त्रिपुरसुन्दरीलाई नै षोडशी भनिन्छ। उहाँको ध्यानविधिलाई यस शीर्षकमा प्रतिपादन गरिएको छ। यस शीर्षक अन्तर्गत षोडशीको मन्त्रोद्धार एवं पूजाविधिका साथै प्रातःकालमा मानिसहरूले उठेर देवता र दिव्यपुरुषहरूको नाम लिँदा मङ्गल हुने हुँदा त्यस्ता देवपुरुष, दिव्यपुरुष र देवीहरूको नामावली यहाँ प्रस्तुत गरिएको छ।)

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्। पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे॥

अथ श्रीचक्रोद्धारः

विन्दुत्रिकोणवसुकोणदशारयुग्मं वस्वस्त्रनागदलसंगतषोडशारम्।
वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रराजमुदितं परदेवतायाः॥

अथ मञ्त्रोद्धारः

आदौ लज्जां समुच्चार्य कराइल ततः परम्। पुनश्च लज्जामुच्चार्य हसकलह तत्परम्॥१॥
ततो लज्जां पुनः प्रोच्य लज्जान्तं सकलन्ततः। षोडशाक्षरमन्त्रोऽयं षोडश्याः समुदाहृतः॥२॥
इयं तु सुन्दरीविद्या देवानामपि दुर्लभा। गोपनीया प्रयत्नेन सर्वसंपत्करी मता॥३॥

अथ मन्त्रः

ह्रीं कराइल ह्रीं हसकलह्रीं सकल ह्रीं।

अथ पूजाविधिः

ब्राह्मे मुहूर्त उत्थाय शयायामेव स्थित्वाशिरसा महासहस्रदलकमले श्रीगुरुं ध्यायेत्।
द्विनेत्रं द्विभुजं शान्तं गुरुं पद्मासनस्थितम्। यथावर्णं सुखासीनं मुक्तं भास्वररूपिणम्॥
वराभयकरं ब्रह्मविष्णुशङ्कररुपिणम्। वामेनोत्पलधारिण्या शक्त्या वामाङ्गसंयुतम्॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥
नमोऽस्तु गुरवे तस्मै इष्टदेवस्वरूपिणे। यस्य वागमृतं हन्ति विषं संसारसंकुलम्॥
अनन्तरात्मगुरुं नमस्कृत्य अन्तरभावनां कुर्यात्। मूलमष्टोत्तरशतं जपेत्॥
समुद्रमेखले देवि पर्वतस्तनमण्डले। पिष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे॥
इति पठन् वामपादपुरस्सरं भूमिं स्पृशेत्॥

तत्र मन्त्रः

लसह ह्रीं ऐं कइ क्लीं स इति स्मृत्वा तत्रवामासनमास्तीर्योपविश्य मूलादिब्रह्मरन्ध्रान्तं मूलविद्यां विचिन्तयेत्॥

मङ्गलम्

मूर्त्तित्वे परिकल्पितः शशभृतो वर्त्मापुनर्जन्मना मात्मेत्यात्मविदां क्रतुश्च यजतां भर्तामरज्योतिषाम्।
लोकानां प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतौ वाचं नः स ददात्वनेककिरणस्त्रैलोक्यदीपो रविः॥१॥
श्रीमत्पङ्कजविष्टरौ हरिहरौ वायुर्महेन्द्रोऽनलश्चन्द्रो भास्करवित्तपालवरुणप्रेताधिपाहिग्रहाः।
प्रद्युम्नो नलकूबरः सुरगजश्चिन्तामणिः कौस्तुभः स्वामी शक्तिधरस्तु लाङ्गलधरः कुर्वन्तु नो मङ्गलम्॥२॥
गौरी श्रीरदितिश्च कद्रुसुभगाः भूतिः सुपर्णा शुभा सावित्री तु सरस्वती वसुमती पत्युर्व्रताऽरुन्धती।
स्वाहा जाम्बवतो सुरुक्मभगिनी दुःस्वप्नविध्वंसिनी वेला चाम्बुनिधेः सुमीनमकराः कुर्वन्तु नो मङ्गलम्॥३॥
नेत्राणां त्रितयं शिवं पशुपतेरग्नित्रयं पावनं यत्तद्विष्णुपदत्रयं त्रिभुवनं ख्यातञ्च रामत्रयम्।
गङ्गावाहपथत्रयं सुविमलं देवत्रयं ब्राह्मणं सन्ध्यानां त्रितयं द्विजैः सुविहितं कुर्वन्तु नो मङ्गलम्॥४॥
अश्वत्थो वटवृक्षचन्दनतरू मन्दारकल्पद्रुमौ जम्बूनिम्बकदम्बचूतसरला वृक्षाश्च ये क्षीरिणः।
सर्वे ते फलसंयुताः प्रतिदिनं विभ्राजनं राजते रम्यं चैत्ररथं च चन्दनवनं कुर्वन्तु नो मङ्गलम्॥५॥
वाल्मीकिः सनकः सनन्दतरुर्व्यासो वशिष्ठो भृगुर्जाबालिर्मदग्निकच्छजनकौ गर्गोऽङ्गिरा गौतमः।
मान्धाता ऋतुपर्णवैन्यसगरा धन्यो दिलीपो नलः पुण्यो धर्मसुतो ययातिनहुषौ कुर्वन्तु नो मङ्गलम्॥६॥
ब्रह्मा वेदपतिः शिवः पशुपतिः सूर्यश्च चक्षुष्पतिः शक्रो देवपतिर्यमः पितृपतिः स्कन्दश्च सेनापतिः।
यक्षो वित्तपतिर्हरिश्च जगतां वायुः पतिः प्राणिनामित्येते पतयः समेत्य सततं कुर्वन्तु नो मङ्गलम्॥७॥
गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्मदा कावेरी सरयू महेन्द्रतनया चर्मण्वती वेदिका।
क्षिप्रा वेत्रवती महासुरनदी ख्याता गया गण्डकी पूर्णा पूर्णजलैः समुद्रसहिताः कुर्वन्तु नो मङ्गलम्॥८॥

गङ्गा गोमतिगोपतिर्गणपतिर्गोविन्दगोवर्धनौ गीता गोपतिगोरजो गिरिसुता गङ्गाधरो गौतमः ।
गायत्री गरुडो गदा गिरिगुहा गम्भीरगोदावती गन्धर्वग्रहगोपगोकुलजनाः कुर्वन्तु नो मङ्गलम् ॥९॥
लक्ष्मीकौस्तुभपारिजातकसुरा धन्वन्तरिश्चद्रमाः गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः ।
अश्वः सप्तमुखः सुधा हरिधनुः शङ्खो विष चाम्बुधे रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥१०॥
इत्येतद्वरमङ्गलाष्टकमिदं पापौघविध्वंसनं पुण्यं सम्प्रति कालिदासकविना विप्र ! प्रबन्धीकृतम् ।
यः प्रातः शृणुयात्समाहितमना नित्यं पठेद्भक्तिमान् गङ्गासागरसङ्गमे प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥११॥
रुद्राख्यानमिदं पवित्रमनघं श्रीमन्मृडान्यान्वितं कृष्णस्यामितविक्रमस्य च यशः शृण्वन्तु सर्वे जनाः ।
देवानां भुवि वासिनामपि तथा तीर्थान्विताख्यापनं श्रुत्वा ब्रह्मपदं प्रयाति विमलं संसेवितं योगिभिः ॥१२॥
ये देवाः सन्ति मेरौ वरकनकगिरौ मन्दरे ये च यक्षाः पाताले ये भुजङ्गाः फणिमणिकिरणध्वस्तसर्वान्धकाराः ।
कैलासे स्त्रीविलासाः प्रमुदितहृदया ये च विद्याधराद्यास्ते मोक्षद्वारभूतं मुनिवरवचनाच्छ्रोतुमायान्तु सर्वे ॥१३॥
द्वे भार्ये सिद्धिबुद्धी तदनु सहचरे ऋद्धिवृद्धी गणाद्ये द्वौ पुत्रौ लक्षलाभौ सकलगुणमयौ मण्डपे कल्पवृक्षः ।
गेहे यस्य प्रभुत्वं परममृतसमं मोदकाखण्डमिश्रं भूयाद् भूत्यै गणेशः सकलगुणकुलानन्दकारी कुटुम्बे ॥१४॥
ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृतिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥१५॥
उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलग्रीवमुदारभूषणगणं शीतांशुखण्डोज्ज्वलं बन्धूकारुणवाससं भयहरं वन्दे महाभैरवम् ॥१६॥
ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गशूलं दधानम् ।
नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ॥१७॥
क्वाऽऽकाशः क्व समीरणः क्व दहनः क्वाऽऽपःक्वविश्वम्भरा क्व ब्रह्मा क्व जनार्दनः क्व तरणिः क्वेन्दुः क्व देवासुराः
कल्पान्तारभटीनटप्रमुदितश्रीसिद्धयोगीश्वरः क्रीडानाटकनायको विजयते देवो महाभैरवः ॥१८॥

## ६. वज्रयोगिनीदण्डकस्तोत्रम्

**(यहाँ भगवती वज्रयोगिनीलाई गद्यात्मक दण्डकद्वारा स्तुति गरी उहाँका विशेषताहरू प्रकट गरिएको छ।)**

ॐ नमः श्रीतारिण्यै

जय जय जगदीशशस्त्रप्रिये नित्यसङ्गत्तरङ्गप्रसङ्गस्फुरदिव्यनद्यावृते विबुधगणनिबद्धनुत्यालिसञ्चारप्रमोदोच्छ्वासदेगण्डयुग्मोज्ज्वलस्फुर्जदुद्यत्प्रभो श्रवणयुगलदत्तसौवर्णताटङ्ककान्तिप्रकाशा–हतध्वांतदिक्चक्रवालान्तरेसुरमुनिगणनम्यसंशुद्धपादारविन्दप्रमुञ्चच्चलन्नूपुरामन्दभृङ्गव्रजे॥१॥ शवहृदयनिवाससम्भारमोदप्रसन्नाननामन्दशुभ्रांशुमन्दस्मिते करधृतशतकोटिसंकाशसंवर्तमार्तण्डविम्बज्वलतखड्ग–कृत्तारिमुण्डव्रजे। अतिशुचिविमललम्बभास्वत्सुविस्पष्टसच्चित्रशार्दूलचर्मावृतक्षीणमध्यान्विते ललिततरविचित्रसुश्यामसम्भाषितानेकदैत्याधिपस्वांतविश्रान्तरक्तप्लुते ॥२॥ करकमलनिविष्टविश्वस्तसौगन्ध्यमत्तद्विरेफाबलिप्रीतिभंङ्कररावैर्युतिधृतललितकन्दर्पविक्षोभितारिव्रजख्यातसर्प्पामिलाक्षोभ्यसंशोभिशीर्षेचिदानन्ददे। निजचरणसम्बद्धविश्रान्तिसिद्धान्तचित्तामिताराधकाभीतिसिद्धिप्रदेचण्डिके खरतमभयभीतशुम्भाहितप्राणमध्वासवोन्मत्तहस्तोल्लसत्पात्रकर्त्रीयुते भुक्तिदे ॥३॥ नवतरुणिमरूपलावण्यसंभावसंभावितोत्तुङ्गपीनस्तने सुत्रपालङ्कृते कमलदलसुदैर्घ्यमालिन्यसंपादनोत्कोषकीर्तिप्रमाद्यत्स्फुरल्लोचने मुक्तिदे। तनुतरमृदुमध्यभागोल्लसद्भङ्गिसम्मोहितव्योमकोशाचलन्मानसे निर्मले वरकुसुमसुगन्धविश्वस्तमेघालिश्यामाभहृत्केशपाशोज्ज्वले शुद्धसत्त्वालये ॥४॥ निहतसकलचण्डदैत्येन्द्रवक्षःस्खलद्रक्तपुरोच्छलत्खप्परि सर्वमन्त्रात्मिके संमदे चितिनिवसतिवारसंलब्धयक्षौघसुस्नेहपूर्णाशये सर्व्वसौख्यप्रदे सर्वदे। अहिधरगणनिर्मितालङ्कृतिव्रातदीप्ताङ्गतेजःपृथाभीरवर्णेऽवगन्धर्ववृन्दान्विते सुरतरुनिभमञ्जुपङ्केरुहारुण्यविख्यातिविध्वंसदक्षस्फुरत्पादपद्मद्वये ॥५॥ त्रिदशनिकरसन्नुते सर्व्वचक्रस्थिते सर्व्वपीठस्थिते सर्वदेवस्थिते सर्वलोकाधिपे अधिकविकटसंवृते सर्वतन्त्रोदिते सर्व्वयोगालये योगमध्यस्थिते मुक्तिदे। सुशमदमजपाकरे वेदविद्यात्मिके तर्कविद्यात्मिके नृत्यविद्याकृते धर्मदे ललितकमलमध्यसंस्थे महायोनिरूपे सुकूर्चोद्भवे शक्तिबीजात्मिके शक्तिदे ॥६॥ सुललितसुकृतावहे कर्मबीजात्मिके भोगमोक्षात्मिके योगिवन्द्येम्बिके पालिके सकलदनुजवंशविश्रामविध्वंसने विष्णुरूपे

परेशे कृपापूर्णमूर्ते उमे। कुसुमितमणिचूडविश्रान्तिबद्धानुरागाश्रये किन्नरोद्गीतगीतप्रबन्धप्रिये विपुलसकुलवर्त्मसंलभ्यपादद्वये सर्वदेवात्मिके शत्रुसङ्क्षोभणे सुव्रते ॥७॥ विदलितनिजभक्तपापव्रजोद्दामदर्प्पोद्भटे वज्रयोगिन्यभिख्येऽतुलप्रीतिदे कबलितघनभीमकान्तिच्छटाभिषिक्तोन्मत्तवृन्दनृमुण्डावलीमण्डिते निर्भये। अनुपमपितृवात्सल्यबद्धशीताद्रिमध्यस्थितोत्साहबन्धे भवश्रान्तविश्रान्तिदे पशुजनविमुखे रमे सर्व्वदुःखौघविध्वंसने श्रीभवत्युग्रतारे मनोऽभीष्टदे ॥८॥

॥ इति श्रीवज्रयोगिनीदण्डकाख्यस्तोत्रम् ॥१॥

## ८. मणिमती(मनोहरा)स्तोत्रम्

**(यस शीर्षकमा काठमाडौँ र भक्तपुरको सीँधमा बग्ने मनोहरा नदीको महिमा बताइएको छ। यसै अन्तर्गत काठमाडौँ उपत्यकाका विभिन्न क्षेत्रहरूको वर्तमान नाम र प्राचीन नामहरूको पनि उल्लेख गरिएको छ।)**

**श्रीमणिमत्यै नमः।**

**इयं सुरतरङ्गिणीसमतरङ्गिणीसङ्गिनी नरायणपदाम्बुना सहजतारिणी तारिणी।**
**अनेकसुखदायिनी मिलितरत्नधारावती रसासु सुरशाखिनी मणिमती वरीवर्त्तते ॥१॥**
तारं सन्दिशतीव पुण्यनिचयं फङ्कारमन्त्रै रवै र्मग्नानुद्धरतीव पापनिवहे दोर्वीचिप्रोद्वर्त्तनैः।
शून्यस्यैव विधानदाहिनरकाणां वर्द्धिनी स्वर्भुवां सेयं भूजननी सदा मणिमती पायादपायाज्जगत् ॥२॥
पापौघान् शोषयन्ती तरणिरिव सतस्तारयन्ती तरिर्वा सोपानालीव वीचिर्गगनगमनया वीचिमुद्वासयन्ती।
देवीशापानपत्यायतिसुरनगरे नागरान् मुक्तिसूतिः ॥३॥
याद्धारातीवसारारिचयपरशुच्छेदने प्रौढधारा हाराकारा रसाया रतिरमणपितुः स्नानसम्पूतनीरा।
साराकारा स्मृतीनां निखिलसुरसुखस्नानसंक्षुण्णधारा पारावारप्रचारा भवतु मणिमती भूतले भूमिसारा ॥४॥
भूत्रस्तत्राणवीजं नमति तिमिरभूध्वान्तसन्तिग्मरश्मिः पापानां प्रान्तभीतासुकृतमतिमतां पुण्यवीचीशुभानाम्।
अच्छिन्नैकाकराली स्वनति मतिमतां विघ्नसंहारकाली ह्यर्थानां कामधेनुर्जयति मणिमती भूतले पुण्यवीथी ॥५॥
वित्ते चित्तं तवास्ते प्रभज मणिमतीं रत्नधातुङ्गसङ्गां मोक्षे चेत्तारिणीगोत्रजगरुडनारायणाङ्घ्रम्बुपूताम्।
भीतौ चेत्ताक्ष्र्यसेव्यां भवजभयहरां वज्रहस्तैकगौत्रां सर्वार्थैकाप्तशक्तिं सुतटिमणिमतीं प्रोह्यकास्ते समर्थाः ॥६॥
असारे संसारे सरलमिति मन्ये तनुभृतामये मातर्द्दोलाचलतलचले तारिणि शिवे।
इहामुत्र स्वर्द्धर्जयति रसना यं रसयति न साध्यं तस्यास्ते न किमपि वृथा मुह्यति खलः ॥७॥
खिन्नः कानीनवक्ता तव गुणकथने को नु वक्ता तदन्यो हेतुर्नो चेद्यदि स्याच्छिशुकलवचनं मातृहर्षाय नूनम्।
वागर्थाज्ञानमानिस्तवकथनतया सान्द्रस्वान्तर्दयार्द्रा त्वञ्चेन्न स्यास्त्वदन्या वद बत भवती काः शरण्या भवेयुः ॥८॥
वेदाः प्रमाणं स्मृतयः प्रमाणं पुराणमप्यत्र महाप्रमाणम्। संकीर्तनं देवतरोः सुनद्याः पठन्नरः स्तोत्रमिदं सुखी स्यात् ॥९॥

॥ इति श्रीमणिमतीस्तोत्रं सम्पूर्णं शुभम् ॥

## ७. शारदास्तवः

**(भगवती सरस्वती विद्याकी अधिष्ठात्री देवी हुन्। काश्मिरदेश र नेपालदेशमा भगवती शारदाको प्राचीन कालदेखि नै महिमा थियो। उहाँकै कृपाबाट काश्मिर विद्याको केन्द्र बन्यो र नेपाल पनि विद्यारक्षामा अग्रणी राष्ट्रका रूपमा परिचित भयो भनी शारदास्तवमा भगवती सरस्वतीको दिव्य गुणहरूको वयान गरिएको छ।)**

इन्द्रादिदेवतववन्दितपादपद्मम् हंसासनात्रिनयनाशुभमङ्गलाय।
कस्तूरीकुङ्कुमसुवासितदेहदेवि ते शारदासकलसिद्धिसदां नमामि ॥१॥
हेमालयं विमलसंस्थितवालरूपी नेपालमण्डलबरोत्तमतारुणिभिः।
श्रीकाश्मीरं च भुवनेश्वरवृद्धरूपी ते शारदासकलसिद्धिसदां नमामि ॥२॥
वेदान्तनादगुणसर्वप्रकाशितेन वागीश्वरस्त्रिभुवनेश्वरवृद्धरूपी।
सावेणुवंशकरपुस्तकअक्षमाला ते शारदासकलसिद्धिसदां नमामि ॥३॥
रूपातिरम्यशशिपूर्णकलास्वरूपी वाणीमनोहरसुलालितपीयूषां च।
नीलोत्पलानयनविन्दुरतस्यज्योतिः ते शारदासकलसिद्धिसदां नमामि ॥४॥
सम्पूर्णकोशतवअक्षयसारदास्ये पातालमध्यत्रिदशालयपूजितानि।

मन्त्रादिवाक्यशतजीवितसर्वयन्त्रो ते शारदासकलसिद्धिसदा नमामि ॥५॥
संसारसारवचनातवसुप्रसन्ना देवानरा अप्सराधिपकिन्नराणाम्।
इच्छामनोरथतवार्चनसिद्धियन्त ते शारदासकलसिद्धिसदा नमामि ॥६॥
कर्पूरपूगपरिपूरितताम्बुलादि पुष्पं शुभाअगुरु चन्दनअर्चितानि।
नित्यं नमामि शिरसा तवमेकभाव ते शारदासकलसिद्धिसदा नमामि ॥७॥
षट्चक्रपद्मतवभेदितमन्त्रराज्यम् सर्वार्थसाधकजनाः सुगतित्वमेव।
त्वं ज्ञानगम्यभवदुःखविनाशकानि ते शारदासकलसिद्धिसदा नमामि ॥८॥

॥ इति शारदास्तवः समाप्तः ॥
॥ शिवम् ॥

९. गुह्यकालीस्तोत्रम्

**(भगवती गुह्यकाली नेपालका आराध्य देवी हुन्। यहाँ कालिकाका अनेक रूप पूजित हुन्छन्। अनेक रूपमध्ये गुह्यकाली जसलाई गुह्यकराली पनि भनिन्छ, उनको धाम विश्वप्रसिद्ध शक्तिपीठका रूपमा रहेको छ। यस स्तोत्रमा उहाँकै महिमा बताइएको छ।)**

नमो गुह्यकाल्यै।

भगवति बहुरूपे निर्विकारे निरञ्जे निचितनिखिलरूपे निश्चयातीतरूपे।
अखिलनिगमपारे नित्यनित्यस्वभावे चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥१॥
हसनमुखशशाङ्क ज्योत्स्नयारात्रिभूतं दशशतकिरणोद्यद्वक्त्रमाध्यान्हिकं ते।
अरुणवदनशोभा औदयश्चाष्टकालः चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥२॥
गलजठरपदेषु स्वर्गमर्त्यादिलोकाः सकलभगणदन्ता रोमराजी द्रुमास्ते।
गिरय इव नितम्बा रक्तशुक्लाः समुद्राः चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥३॥
पवनदहनवेगः श्वासप्रश्वास एव प्रलयप्रभवकालोन्मीलनोन्मिलनाभ्याम्।
द्विदशतपनभूता भीमवक्त्रास्त्वदीयाः चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥४॥
अनुपमतनुदेहव्याप्यमानं समन्तात् निखिलनिगमसारं दर्शयन्देविदिव्यम्।
त्रिभुवनमखिलं तद्दर्शितं मेरुबुद्धिः चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥५॥
विधिमुखविबुधास्ते किंकराः पादसंस्थाः मुकुटविधृतबुद्धेः सर्वमार्गाविशुद्धेः।
किमुतवमहिमानं वर्णये गुह्यदेवि चरणकमलयुग्मं नौमि देवि त्वदीयम् ॥६॥
अनुपठति समाप्ते पूजयेत्भक्तिमान् यः नुतिमतिवितनोति स्पष्टमेवाष्टबुद्धिः।
सकलजनजनन्या भक्तिसम्पत्तिरुच्चैः करतलवशगाष्टौ सिद्धयोऽसौ लसन्ति ॥७॥

॥ इति श्रीगुह्यकालीस्तोत्रं समाप्तम् ॥

११. लक्ष्मीस्तुतिः

**(भगवती लक्ष्मी भगवान् नारायणकी धर्मपत्नी हुनुहुन्छ। उहाँ सम्पत्ति, शोभा र गृहलक्ष्मी, स्वर्गलक्ष्मी, राजलक्ष्मी आदि रूप लिएर संसारको रक्षामा तत्पर हुनुहुन्छ। यस स्तोत्रमा उहाँको महिमा बताइएको छ।)**

श्री लक्ष्मीदेव्यै नमः।

रत्नप्रसूनगुणसागरपुष्पनागस्वर्णाद्रिकाञ्चननिभाभिधधर्मराजः।
यस्य प्रसादबललब्ध महाप्रतिष्ठा लक्ष्मीर्विराजतितरां सकलार्थदात्री ॥१॥
तां नौमि पद्मधरजानुभवां वरेण्याम् दारिद्र्यदुःखदुरितार्णवसेतुभूता।
कूर्मासनां सुवदनां निधिपद्महस्तां कान्त्याविभूषणजयादशभाजयन्तीम् ॥२॥
रत्नाकराजनिरिति प्रवदन्ति केचिल्लम्बीजतश्चनिगदन्तिहरिप्रियां च।
सम्भावयामि जगदर्थिकरीभवन्ति पद्मालयेति कमलेति जनात्मजेति ॥३॥
॥ इत्यमृतकृतिलक्ष्मीस्तुतिः समाप्ता ॥

१०. वाग्वतीस्तुतिः

पशुपतिपुराणमा प्रकाशित वाग्वतीस्तुतिका सूत्रधार पुलस्त्य ऋषि हुन्। उनैले भगवान् पशुपतिलाई नुहाइदिन भगवती वाग्वतीको परिकल्पना गरिएको हो भन्ने तथ्य उजागर गरेका छन्।)

ॐ नमः श्रीवाग्वत्यै।

या दैत्यराजपरितोषितदेवदेवमुक्ताट्टहासनिकरामलवारिधारा।
हेमारविन्दरजसारुणितोर्मिमाला सा वाग्वती दिशतु कामफलं नराणाम् ॥१३॥
या कल्पिता पशुपतेः स्नपनाय नित्यं मन्दाररेणुकलिकामलपुण्यतोया।
कुन्देन्दुशङ्खधवलामलफेनमाला सा वाग्वती दिशतु कामफलं नराणाम् ॥१४॥
या पुष्पपत्रपतनाकुलतीररेखा मुक्तोत्पला मरकतोपलतुल्यभासा।
चक्राङ्गयुग्मशवलीकृततीररेखा सा वाग्वती दिशतु कामफलं नराणाम् ॥१५॥
या निम्नगा सुरसरिज्जलसन्निकाशा शैलाधिराजकटकोपलसंस्खलन्ती।
सोपानपङ्क्तिसदृशी त्रिदशालयस्य सा वाग्वती दिशतु कामफलं नराणाम् ॥१६॥
या पूजिता विकसितैरपि पारिजातैः तीरोपलेषु सततं सुरसुन्दरीभिः।
नागाङ्गनावदनपङ्कजसक्तफेना सा वाग्वती दिशतु कामफलं नराणाम् ॥१७॥
या मानिता मकरकेतुवचोभिरुच्चैः संरक्षणापहरणादपि चन्द्रवत्याः।
देवाङ्गनाकुचतटाहतवीचिमाला सा वाग्वती दिशतु कामफलं नराणाम् ॥१८॥
या यक्षकिन्नरमहोरगपूजनीया सम्पूजिता सुरवधूभिरनेकपुष्पैः।
सिद्धाङ्गनाङ्गपरिमुञ्चनपुण्यपाथाः सा वाग्वती दिशतु कामफलं नराणाम् ॥१९॥
या सर्वकामफलदाखिलसाधकस्य क्रीडानुरागजननी नरकामिनीनाम्।
सम्पूजिता सुरगणैरपि पुष्पवृष्ट्या सा वाग्वती दिशतु कामफलं नराणाम् ॥२०॥
या शम्भोर्वृषभेन्द्रपङ्कजमुखप्रस्यन्दनादागता गीर्वाणारिनिसूदने पशुपतौ प्राप्ता परामुन्नतिम्।
कूर्मग्राहझषाकुलातिचपला गङ्गेव नाकप्रदा सैषा पुण्यतमा पुनाति सलिलैर्लोकं सदा वाग्वती ॥२१॥
पीतं बलाद्यदमृतं बृषभेन पूर्वं तन्नन्दिना प्रविततं भुवने यदस्तम्।
तस्मात्सुरैर्मुनिजनैर्मनुजैस्त्रिवेणी संसेव्यते सततमप्सरसां च वृन्दैः ॥२२॥
तां वाग्वतीं ऋतुशताधिकपुण्यतोयां दृष्ट्वा नराः कुसुमरेणुकृताङ्गरागाम्।
निर्धूतकल्मषकषायविशुद्धदेहाः सद्यो भवन्ति पुनरेव सुखानुरागाः ॥२३॥
पद्मोत्पलैर्बकुलचम्पकनागपुष्पैरामोदितं तव पयस्तटजैः प्रसूनैः।
फेनाकुलैर्विविधचित्रतरैस्तरङ्गैः मन्दाकिनीव सुरलोकगतं पुनाति ॥२४॥
नेपालमण्डलसमस्तनिरस्तदुःखा या वाग्वती त्रिभुवनं खलु जाततापम्।
सेयं पुनाति बहुधा बहुपापमुक्ता त्यक्त्वा नराः स्वजनबन्धुभिराप्तवर्गैः ॥२५॥
स्नानावगाहनरता जलपानशीला गङ्गेव पासि सततं पतितांश्च तोये।
आसंश्रिताघमपि न स्मरणप्रयुक्ता धर्मात्मजं तव जलं मुनयः पठन्ति ॥२६॥
ऋक्षैणसिंहजगण्डवरा विरङ्गा अन्येऽपि ते तव जलं प्रसुतास्तुवास्तु।
ब्रह्मेन्द्रवह्विविधुरुद्रसमानरूपाः ते यान्ति रुद्रनिलयं प्रविमुक्तशोकाः ॥२७॥
अन्यस्तुवस्तुपरमस्तुतिरप्रमेया या पाति निर्मलजला सकलं त्रिलोकम्।
मुक्तामिमां पशुपतेः स्तवनाय नित्यं संप्रस्थितासि विरयोऽप्रतिमं विभूत्यै ॥२८॥
(सम्प्रस्थिता गिरिवरात्प्रथमा विभूतिः)

॥ इति पशुपतिपुराणोक्तवाग्वतीप्रशंसायां पुलस्त्यभाषिता वाग्वतीस्तुतिः ॥

१२. वाग्वतीस्तोत्रम्

(ललितत्रिपुरसुन्दरी देवीको आज्ञाले पण्डित वाणीविलासद्वारा तयार गरिएको यो वाग्वतीस्तोत्र थापाथलीको पुलमा रहेको अभिलेखमा कुँदिएको छ। यसमा भगवती वाग्वतीलाई गंगासमान मानी स्तवन गरिएको छ।

श्रीगणेशाय नमः । श्रीवाग्वत्यै नमः ।
जननि वाग्वति त्वत्स्तुतीरवाङ्मनसगोचराः कर्तुमीश्वराः ।
जगति पामरा मादृशा नराः कथमलन्तरामत्र सह्यताम् ॥१॥
जलरुहं जलाज्जायते जलाज्जलरुहं नहि व्याप्तिमत्र ताम् ।
इति विधेर्हरस्यम्ब भीतिभिः शिवमुखाब्जजा त्वं सती भुवि ॥२॥
पशुपतेः स्फुटां त्वां दयामहं जननि वेद्मि यत्त्वामुपागताः ।
शिवपुरे जना भस्मधारणाः शशिविभूषणा नन्दिवाहनाः ॥३॥
जलकणैर्युतो मारुतो वहन्नयति शुद्धतां दिग्विदिक्स्थितान् ।
जननि जन्मिनः पातकात्मनः सुरपुरेश्वतः स्पर्शमात्रतः ॥४॥
तव जलं समाश्रित्य यो जनः शिशिर आगते कम्पते ततः ।
स्मरशरव्यथाकम्पनं जनाद्दधत उर्वशीमुख्यनायिकाः ॥५॥
पतति यज्जले वस्तु तल्लघु किमपि यत्र वाःपूर एति तम् ।
ननु यतो भवत्यम्ब तत्र किं त्वयि पतज्जनस्त्वेति तं शिवम् ॥६॥
जलगतं च यत्तच्च मज्जति गुरु कलेह यस्त्वज्जले जनः ।
जननि मन्यते तन्न चामृतं जलधिनिःसृतं देवतामृतम् ॥९॥
तव तटे जनन्यत्र वासतः पशुपतिर्जगन्मुक्तये स्थिराम् ।
परिहसत्यहो विश्वनाथसत्कृतसुरापगां काशिकावहाम् ॥१०॥
तव तटोदरे तीर्थकोटयस्तदुपवर्णने चेच्चतुर्मुखः ।
दशशताननः स्यामहं तदा किमु भवेयमीदृक्तु न क्षमः ॥११॥
पशुपतिः शिवो ज्योतिरीश्वरः सकलसिद्धिदा गुह्यकालिका ।
विजयते मुदा त्वत्तटे सदा त्वमिह सर्वदात्रेति नाद्भुतम् ॥१२॥
सलिलसन्निधौ दैवयोगतो मृतिमुपागता ये चराचराः ।
विरहिता अमी कोटिजन्मसञ्चितमलैर्व्रजन्तीशपत्तने ॥१३॥
शिव जगत्पते पार्वतीपते पशुपते महादेव शङ्कर ।
इति सुजल्पतोऽहर्निशं मम भवतु त्वत्तटे गङ्गिके स्थितिः ॥१४॥
तव जलेथवा जह्नुजाजले शिव शिवेति वा राम राम वा ।
मरणसन्निधौ जिह्विका मम वदतु ते स्तुतेरम्ब पाठतः ॥१५॥
यदमलाम्बुनो नित्यसेवनं वृजिननाशनं दुःखदारणम् ।
भविकभावनं मुक्तिकारणं शरणमेमि तां वाग्वतीमहम् ॥१६॥
सूरीन्द्ररामहृदयस्य सुतेन भक्त्या वाणीविलासविदुषा रचितस्तवोऽयम् ।
अस्योषसि प्रपठनाद्भवतु प्रसन्न श्रीवाग्वती वरनदी निखिलाघहन्त्री ॥१७॥

॥ इति श्रीमन्महाराजाधिराजराज्ञ्याः श्रीललितत्रिपुरसुन्दरीदेव्या आज्ञया
रामहृदयपण्डितात्मजवाणीविलासपण्डितकृतं वाग्वतीस्तोत्रम् ॥

॥ शुभम् ॥

### १३. कालिकाभुजङ्गदशकम्

(यो कविराजा जयप्रताप मल्लको रचना हो। यसलाई अनुसन्धाताहरूले संस्कृतसन्देश अंक ११ मा प्रकाशित गराएका थिए। यसमा भगवती कालिकाको महत्त्व बताउने १० वटा पद्य रहेका छन्। यस स्तोत्रले राजा प्रताप मल्ल विशिष्ट विद्वान् रहेको कुरा प्रमाणित गर्दछ।)

नमः श्री श्री श्री कालिकायै ।

लसत्कर्णमाकन्दसन्मञ्जरीषु प्रलोभभ्रमद्भृङ्गमालाभिरामाः।
कटाक्षा अमुष्या महाकालिकायाः करिष्यन्ति नः शर्म चिन्ता न कापि ॥१॥

अरेरे परेतेशदूताः कुजाता वथा ताम्यथोच्चैः किमेतावता मे।
भयं नैव किञ्चित्सनाथोऽहमुच्चैर्म्महाकालिकाङ्घ्रिद्वयेनाम्बुजेन ॥२॥
अहो जन्मजन्मान्तरपुण्यप्रसर्प न्महाभाग्यमेतत्समुल्लासितं यत्।
स्फुरत्पादपङ्केरुहं कालिकायाः पवित्रातपत्रायते मस्तके मे ॥३॥
कलङ्की हिमांशुः कुजातश्च भौमो बुधो हन्त कुण्डोऽथ काव्यश्च काणः।
शनिः खञ्जभूतोऽङ्गहीनोऽथ राहु र्विहीनश्च केतुर्न गण्योऽपहारे ॥४॥
यतो मेऽपकर्तुं क्षमध्वे न यूयं महाकालिकापादुकायाः प्रसादात्।
रवे वंशनाथोऽसि मान्यो गुरो त्वं नमोवाञ्जनो जन्तवोऽन्ये न गण्याः ॥५॥
त्वदीयस्फुरत्पादपद्माभिजातो लसच्छ्यया नैव किं किं सुखं नः।
नमस्ते नमस्तेशि कालि प्रसीद पदद्वन्द्वनिर्द्वन्द्वभक्तिर्म्ममास्तु ॥६॥
कलिन्दात्मजावीचिसन्दोहशोभां मुहुः संहरन्तीव दृग्भङ्गिराजिः।
भरीभर्त्तुगुह्येशि भव्यं सदा सा सदिच्छाभरापूरिणी देवि कालि ॥७॥
त्वमेका शिवे प्राणरूपासि मे त्वं जगद्धारिणी वैरिविध्वंसिनी च
त्वमेकासि नान्या हि किं वा वदामि प्रसीद प्रसीदाम्बिके चण्डिके हे ॥८॥
विहायाम्बिके कालिके त्वान्यदेवं न मन्ये न मन्ये न कुर्वे नतिं वा।
सुरेशेषु नन्दात्मजाद्येषु सत्यं न वा तेषु दीनं वचोऽहं ब्रवीमि ॥९॥
महाप्रेतपञ्चोपरिस्थां महोग्रां भजे त्वां निषण्णां महापीठमध्ये।
स्फुरत्कल्पवल्लीवृतेऽतीवरम्ये दृगन्ताभिपातं मयि त्वं कुरुष्व ॥१०॥
कवीन्द्रेण राज्ञा प्रतापेन रम्यं प्रणीतं दशाद्यं भुजङ्गप्रयातं
इदं कालिकाया विशुद्धान्तरात्मा पठेद्यस्तु सौख्यं लभेन्मोक्षमन्ते ॥११॥
॥ इति श्रीश्रीकविन्द्रजयप्रतापमल्लदेवविरचित श्री ३ कालिकाभुजङ्गदशकं समाप्तम् ॥
इत्थं राजाधिराजस्तरणिकुलजनिः श्रीप्रतापाभिधानो
निर्म्मायोदग्रसिंहध्वजबलितमसुं दिव्यदेवालयं च।
द्वारा तद्देशिकस्य क्रतुबलिविधिना कारयित्वा प्रतिष्ठां
गुह्येश्वर्यै भवान्यै निजकुशलकृते संददेऽस्यै विनम्रः ॥
संवत्सरे जलधिशैलतुरङ्गबद्धे (७७७)वैशाखकृष्णदलषष्ठितिथौ शुभाख्ये।
योगे च विश्वभयुते गुरुवासरेऽस्य धाम्नोऽमुना नृपतिना विहिता प्रतिष्ठा ॥७॥
शिवम् (संस्कृतसन्देश अ. ११। गुह्यकालीमन्दिरशिलालेखात्।)
॥ इति शक्तिप्रकरणम् ॥

# अथ शिवप्रकरणम्

## १. शिवशिखरिणीमाला (किरातकविकृता)

(शिवशिखरिणीमालानामक स्तवकाव्यका रचयिता किरात कवि हुन्। प्राचीन नेपालमा किरातहरूको शासन थियो र किरात जातिका विद्वान् एवं कविहरूले संस्कृतभारतीको सेवामा आफूलाई समर्पित गरेका थिए। यस विषयको प्रमाणका रूपमा शिवशिखरिणीमाला नामक स्तवकाव्य रहेको छ। यसको सङ्ग्रह योगी नरहरिनाथज्यूले गर्नुभएको हो। यस स्तोत्रमा भगवान् पशुपतिको महिमगायन गरिएको छ।)

ॐ स्वस्ति

श्रीकान्तद्रुहिणोपमन्युतपनस्कन्देन्दुनन्दादयः प्राचीना गुरवोऽपि यस्य करुणालेशाद्गता गौरवम्।
तं सर्वादिगुरुं मनोज्ञवपुषं मन्दस्मितालङ्कृतं चिन्मुद्राङ्कितमुद्रपाणिनलिनं चित्ते शिवं कुर्महे ॥१॥
परशिवपरोत्कर्षप्रख्यापनैकपरायणा, पवनतपनव्यासाद्युक्त्युत्करैरुपबृंहिता।
कुमतिपरिषच्चेतःकीलायतार्थनिबन्धना, जयति नितरामाद्या विद्या जनस्य हितैषिणी ॥२॥
प्रभावं ते नालं परशिव परिच्छेत्तुममरा नरस्तोतुं वान्छन्न कथमपि हास्यत्वमयताम्।

तथापि त्वन्नामस्मृतिगुणनिकापुण्यभजनं कुतोऽप्यस्तु द्वारादिति मतिरिह प्रेरयति माम् ॥३॥
त्वमेवात्मन्विश्वाधिक इति जगत्सेव्य इति च स्फुटं ब्रूते वेदस्तदपि विवदन्ते बत खलाः।
किमेषां तद्द्रोहव्यसननिहतं जीवनमिदं यदुक्तीः श्रोतॄणां मरणमुदितं निष्कृतिरिति ॥४॥
वराकैरेतैः किं द्विपदपशुभिः कार्यमथवा न खल्वीष्टे जन्तुर्निजहिततदन्याचरणयोः।
स भक्तान्तर्यामी शिव शिव यथा प्रेरयसि यं तथा कुर्वन्निघ्नः स कथमिव निन्द्यः पशुपते ॥५॥
विलोक्य ह्येकैकं श्रुतिषु विधिवाक्यं विदधते मखादौ विश्वासं निखिलनिगमान्तेषु विदिते।
तवैश्वर्ये ताराधिपशकलचूडाल भगवन् कथं कुर्युर्नैते यदि हि न भवेयुः परवशाः ॥६॥
यमग्रे दृष्ट्वापि स्मरहर विमूढः शतधृतिहरेर्वाचाज्ञासीत् क्षितिधरसुतायाः शतमखः।
किमन्यैर्वैकुण्ठस्तवविधियुतस्तत्र विमतौ कथा कैव स्वामिन् जडनरवराकस्य भवति ॥७॥
त्वयि श्रद्धा नाथ प्रवचनबलान्नैव सुलभा न मेधाबाहुल्यान्न च विविधशास्त्रेषु घटनात्।
प्रसादाद्देवानां न हि तव लभन्ते सुकृतिनः ततस्ते दुर्दान्ताः कथमिव लभेरन्कुमतयः ॥८॥
तव श्रीपादाब्जे कथमपि च भक्तिर्न सुलभा निहन्त्री दुःखानां निखिलपुरुषार्थैकवसतिः।
विना पुण्यैर्जन्मान्तरशतसहस्रेषु विहितै-र्जनश्रेयोमानं खलु बहुलविघ्नं न लभते ॥९॥
दधीच्याद्यैः शप्ता गिरिशदनुसूनुप्रकृतयः कथं त्वां जानीयुः कलिमलिनचिन्ताहतिचितः।
विधूतान्तध्वान्ता विविधभवसम्पन्नसुकृता यतन्ते बोद्धुं त्वां यमनियमसत्कर्मनिरताः ॥१०॥
अपारं विज्ञातं गिरिशमहिमानं तव परम् विधातुं वा भक्तिं तव चरणयोर्नित्यमचलाम्।
प्रसादं वा लब्धुं वरद तव पूजाभिरधिकं जगत्येकः शक्तो जयति वनमाली स भगवान् ॥११॥
अनन्तं यत्प्राहुर्निरतिशयसच्चित्सुखवपुः पराभूतद्वैतप्रकरविशदं प्रत्यगदितम्।
अखण्डार्थैर्वेद्यं वचननिकरैरौपनिषदै-र्महादेवज्योतिस्तदसि परमात्मेति विदितम् ॥१२॥
गुणातीतोऽपि त्वं सगुण इव मायाशबलितः परिष्कुर्वन्शार्वं वपुरसितकण्ठं त्रिनयनम्।
अभिख्याभिख्यातः शिवभवमुखाग्निर्विजयसे नियन्ता लोकानां सहरिहरपङ्केरुहभुवाम् ॥१३॥
अपास्य ब्रह्मादीनमरवर सर्वानपि सुरान् प्रसूता भूताद्यै प्रमितविभवास्ते परमिति।
निदानं त्वां सर्वेश्वरमपि च निर्द्धार्य विदधे शिखासदभिर्ध्येय शिव तदपि मुह्यत्यतिलघुः ॥१४॥
श्रुतं पूर्णैश्वर्यं क्वचिदपि हि यत्केवलमिदं विरोधे सङ्कोचं विमलगुणशुक्यं गमयितुम्।
न युत्यैवंकारं नलिनजमुखा दैवतगणाः व्यवच्छिद्यैतस्यां भवति भव विख्यापयिषितम् ॥१५॥
उपक्रान्तिं साधारणगुणवदाभ्यां हरिपरा मनूक्त्या त्वय्यर्थादधिगमितया कारणतया।
अमुष्या निश्चिन्वन्प्रसभमुपसंहारमपि च स्वयं मुह्यत्येकः कथमिव न मन्त्रेऽप्यनुगताः ॥१६॥
जडानीशौ नैव प्रभवत इति ब्रह्म जगतां निदानं निश्चित्य त्वथ विमृशतां किन्नु तदिति।
महादेव्या दृष्टा त्वमितिमतिरासीद् यमवतामिति त्वां श्वेताश्वतरनिगमान्तः शिवपरम् ॥१७॥
प्रवृत्तेष्वन्यार्थप्रभुतिलकसर्वश्रुतिगणेष्वमुख्यार्थं युक्तं मतमपि पदं कारणपरम्।
इहत्वन्नामेशो हर इति च तन्निर्णयवचस्वमुख्यार्थं नीतं यदि वत हतानिर्णयकथा ॥१८॥
अमुष्मिन्नाम्नातः शिखरितनयावल्लभ यदा तमस्तन्येतेषां स्वयमुपदिशं कारणगिराम्।
अशेषाणां मन्त्रो भवति मगवत्पर्यवसितिं नयत्युन्मत्तानामितरपरता किं विफलताम् ॥१९॥
पुरो वादश्रुत्यन्तरविहितरूपे यदि परमियच्छेदात्मानं पठितमिह तन्त्रं शिवपदम्।
यदेत्याद्यं कालं मनुरयमनुद्यःस्मररिपोः रवीशत्तां किन्न जगति विदधानस्तव तदा ॥२०॥
इयं मानोत्क्लिष्टा हर शिवमुखानन्यविषया त्वदाख्यामालालङ्कृतनिखिलमन्त्राङ्गमधुरा।
समस्ते नैवासीदुपनिषदुमावल्लभ दृढं भवत्येवाधत्ते सकलमपि भावं गुणनिधौ ॥२१॥
क्वचित्संसक्तस्य स्पृशति शिव मन्त्रानिति कथं जहात्येषानेकश्रुतिनियमिता त्वद्विषयताम्।
अपि श्रीरुद्राणामह वहुषु मन्त्रेषु भगवन् अधीतेष्वज्ञाना किमिव च ततो निर्णयवचः ॥२२॥
मनूनां रौद्राणां प्रथममनु चाम्नातमिह यत् यदप्येते नाथ स्फुटतरभवन्नामघटिताः।
दृढं रुद्राध्यायो यदपि च भवत्येवनियतः ततस्तेषामेव प्रमितिकरमाम्लानमिह न ॥२३॥
उरीकर्तुं युक्ता हर पुरुषसूक्तस्य च बुधैः त्वयीशानश्रुत्या समधिगमिते पर्यवसिति।
भवत्वय्यन्येष्वागमविधिषु योगो विधिबली ददौ निर्वाहार्थान्यपि विवरणानि स्मृतिकृताम् ॥२४॥

वदन्सर्वात्मत्वं विबुधसमुपास्यत्वमपि ते विरिञ्चोपेन्द्रादीन्नपि तव विभूतीरूपदिशन्।
निरुक्त्या ते नाम्नामपि च विभवन्ते विशदयन् गिरां गुम्फः श्रैष्ठ्यं प्रकटयति तेऽथर्वशिरसः ॥२५॥
अमुष्मिन्नन्तर्द्धिस्तव समुदितो येन वचसा त्वदुक्तानामन्ते परमशिव योज्येन वचसाम्।
यदस्य स्वस्थानेऽन्वयमलभमानस्य घटने खलानां मौढ्यं तत्परिणमति पाण्डित्यविधया ॥२६॥
इहात्मीये रूपे वरद परिपृष्टे तव सुरैस्त्वयान्यस्यैवोक्तं तदिति किमियं ग्रन्थघटना।
त्वमन्तर्यामी संस्त्वमितरमवोचः स्वयमिति प्रलापो वा केषां विशति हृदयान्यप्यविदुषाम् ॥२७॥
त्वमेवान्तर्यामीत्यधिगमितमेतत्खलु विभो रमेशाधिष्ठानप्रकटनवरैरौपनिषदैः।
त्विषां पत्युर्बिम्बे कृतनिवसतेः तस्य भगवन्नुमानेत्रानन्दं वपुरुपदिशद्भिश्च मनुभिः ॥२८॥
महाभूतान्यर्कः शिशिररुचिरात्मेति भगव न्नशेषं वस्त्वेतत्तव खलु तनुत्वेन विदितम्।
अधिष्ठातृत्वं ते हर किमियता नाध्यवसितं मुधा मूखनितान्मुखरयति मोहस्त्वितरथा ॥२९॥
शिवं नीलग्रीवं शिखरिवरकन्यासहचरं त्रिनेत्रं त्वां ध्येयं गिरिश दहराम्भोजकुहरे।
विधायैकं साकं द्रुहिणकमलावल्लभहरैर्विभूतिं कैवल्यश्रुतिरखिलमाख्याति भवतः ॥३०॥
तया संक्षिप्योक्तां तव दहरविद्यां विदधतो विशेषैरप्युक्तैरूपनिषदुमाकान्त महती।
अनुध्यानार्थं ते हृदि मुररिपोरान्तरतया प्रसज्यैनं मध्ये प्रबलयन्ति मोहं हतधियाम् ॥३१॥
श्रुतीनां मूर्धन्याः सुपदबृहदारण्यकमुखाः प्रभावं हार्दस्य प्रणिजगदुरन्येपि भवतः।
गुणानां बोद्धारः सकलमुपसंसारनियमम् विदुस्त्वय्येवैषां हृदयमिति किं मूढवचनैः ॥३२॥
विधत्ते माण्डूक्यश्रुतिरपि समस्ताधिपतिताम् समानार्थे श्रुत्यन्तरविवृतभावा तव विभो।
तथैशाना मन्त्राः स्मरमथन रुद्रोपनिषदि प्रतीता मन्त्राश्च प्रकटतरमन्ये च बहवः ॥३३॥
अनन्यप्राप्यं ते कमपि महिमानं प्रकटयन्त्यसङ्ख्येया मन्त्रा निरवधिनमस्कारघटिताः।
स्वयं शूद्रादीनामपि शिव पतन्तश्चरणयोर्नमस्कारे भारं न विदधति मूर्खा न तु बुधाः ॥३४॥
नमस्यानामेकं विषयमखिलानां च वचसां महाविष्ण्वादीनामपि जनयितारं दिविषदाम्।
वदन्तस्त्वामन्ये वरद तव शंसन्ति विभवम् गुरुकुर्वन्तस्ते गिरिश गणनाथानपि भृशम् ॥३५॥
असंख्याभिः शाखावितितिभिरूपन्यस्तमखिलम् सुसूक्ष्माभिर्न्यायाबलिभिरवसेयं च भवतः।
प्रभावं निष्कृष्य स्फुटमिह पुराणानि बहुधा कपर्दिन्नाबालं करवदरकल्पं विदधति ॥३६॥
प्रभावं ते भीम प्रकटतरमावेदयति नः प्रभूणामाद्यानां प्रथम भगवन् भारतमपि।
मुकुन्दं यत्र त्वच्चरणनलिनाराधनपरम् भवन्तं च ब्रह्माच्युतहरपरं नाथ शृणुमः ॥३७॥
प्रबन्धो वाल्मीकेरपि तव परत्वं द्रढयति स्फुटं यत्र ब्रह्माच्युतहरपरत्वं तव विभो।
यियक्षोर्भावोक्ता भवति हयमेधे रघुपते स्तदाराध्यत्वं ते दृढमपि च यत्र प्रकटितम् ॥३८॥
प्रसिद्धाः स्मर्तारः शुभदमनुयोगीश्वरमुखाः पतञ्जल्याद्याश्च प्रथितमतयो दर्शनकृतः।
प्रभिन्दाना मार्गानपि च विविधानन्यविषये भवन्तं विश्वस्मादधिकमुपगच्छन्ति भगवन् ॥३९॥
निबन्धुः सूत्राणां निगमासरसोत्थं प्रथयतामपि स्पष्टो भावस्तव शिव परत्वे विमृशताम्।
पुमांसं योऽङ्गुष्ठप्रमितमनपेक्ष्यापरनयं तवेशान श्रुत्या वरद निरचैषीत्पर इति ॥४०॥
पदं यद् ब्रह्मेति प्रथिततरमों तत्सादिति च प्रसिद्धं यद्गीतास्वचलतनयानन्दजलधे।
अमीषामर्थं त्वामधिगमयतः शास्त्रनिकरा दपि स्पष्टं नाथ त्वमिह परमं दैवतामति ॥४१॥
त्वदन्यं कं ब्रूमः परमशिव सर्वेश्वर इति त्वमीशानादीनां ननु भवसि वाच्यः श्रुतिगिराम्।
समाख्या न त्वेताः श्रुतय इति मोहान्धकुहरे स्फुरन्मीमांसादृक् प्रपतति न चेतः कृतधियाम् ॥४२॥
प्रयुक्तं त्वय्येवश्रुतिषु दयने कुत्र भगवन् पुराणेष्वभ्यस्तं पुरमथन विश्वाधिकपनम्।
परिच्छिन्दन्तत्ते स्फुटमखिललाकाधःपतितां विमूढस्वान्तानां व्यथयतितरां श्रोत्रपदवीम् ॥४३॥
यदि स्यादैश्वर्यं न भवति परिच्छेदविधुरम् क्व विश्रान्तिर्नाथ व्रजतु भवतोऽन्यत्र भगवन्।
विभिन्नाः प्रत्यण्डं विधिहरिगिरीशा नियमितास्त्वया कल्पे कल्पे दधति भवदाज्ञां नवनवाः ॥४४॥
अलं मानैरन्यैरखिलजगतीनामधिपते तवाधिक्यं शक्यं वदितुमियतैव स्फुटमिति।
त्वदुत्कर्षं भूयान् प्रथयति यदाम्नायनिचयस्तदर्थं व्याकुर्वन् यदपि च पुराणादिनिकरः ॥४५॥
अनन्यार्थैः शब्दैः श्रुतिषु परभावः प्रकटितः श्रियो देव्याः पत्युर्न तु तदितरेषां दिविषदाम्।

अतस्तैरेवार्थाविधृतिरपि मन्त्रोपनिषदाद्यनध्यायो मूढान् मुखरयति मृत्युञ्जय मुधा ॥४६॥
यदन्योन्याधिक्यं विधिहरिहरणां विदधतां पुराणानामाद्यां गतिमभिदधौ कल्पभिदया।
तदप्रामाण्यं त्वन्महिमवचसा वक्ति वच इ त्यसभ्यानस्थाने मुखरयति मोहः पशुपते ॥४७॥
तवैश्वर्यं चक्रिण्यपि तदवतारेष्वपि परं तदंशत्वेनैक्यात्परमुपदिशन्ति श्रुतिगिरः।
अमूषामेतावन्मुनिभिरुदितं मर्म भगवन् न बुध्वैके मौढ्याद् भ्रमतमसि मज्जन्ति विविधे ॥४८॥
समुत्पन्नस्त्वत्तः प्रथममसहायस्तत इदं जगत्संहर्तार पुरुषमरविन्दासनमपि।
पुरास्राक्षील्लक्ष्मीपतिरिति महत्योपनिषदा यदुक्तं तादृक्तु त्वयि न भजते पर्यवसितिम् ॥४९॥
क्वचित्कल्पे वेधाः क्वचिदपि हरिः क्वापि च हरः समुत्पन्नस्त्वत्तः प्रथममितरौ नाथ सृजति।
अनेनाधिक्यं वा कथमपि च कैवल्यमपि वा न कस्यापीत्याहुर्निगमगणनिष्कर्षनिपुणाः ॥५०॥
हरं केचित्प्राहुर्द्रुहिणमधुजिद्भ्यामपि परं क्वचित्ताभ्यामस्योद्भवकथनमप्यंशविषयम्।
त्वदौपम्यं नामाकृतिचरितवेशप्रभृतिभिस्त्वदीयं प्रत्यासत्त्यतिशयकृतं चास्य भगवन् ॥५१॥
त्रयाणां देवानां भवतु सममैश्वर्यमथवा भवत्वेषां मध्ये भवभयहरः स्थाणुरधिकः।
प्रसिद्धस्त्वं तावत्परमशिव सर्वोत्तर इति त्वमेकः संसेव्यो भवसि निखिलस्यापि जगतः ॥५२॥
त्वमेकः सर्वेषां पुरमथनसेव्यो जनिमतामजानन्तस्त्वेतद्वत विफलयन्त्यायुरधमाः।
मनुष्या देवानामिव तव सदेवासुरनराः श्रुता ह्येते जीवाः पशुवदुपभोग्याः पशुपते ॥५३॥
मनुष्यत्वं प्राप्य त्वयि विदधते दुष्कृतवशान्न भक्तिं ते तेषां कथमपि च पश्यामि न गतिम्।
यतस्तत्तत्कर्मोत्करमुपदिशद्भिर्मुनिवरैर्विशिष्यैषा तेषामपि गिरिश धर्मेषु गणिता ॥५४॥
द्विजानां गायत्री खलु परमुपास्या नियमिता प्रसिद्धस्तस्याश्च त्वमसि परमं दैवतमिति।
अकुर्वाणास्स्वान्तेस्तव चरणसेवां द्विजपशो न कस्यालङ्कारः सकलमपि सत्कर्मचरितम् ॥५५॥
यदग्नौ विप्राणामुपदिशति देवं तदपि ते तदन्तर्यामित्वं तरुणशशिभूषः प्रथयति।
श्रुतिस्मृत्याम्नातं वदननिकुरम्बाद्वयमिदं यतः सम्भूय त्वां गिरिश कुलदैवं वदति नः ॥५६॥
गतिस्त्वं प्राप्तानां पुरहर जनिं ब्राह्मणकुले विशेषादेतस्मिन् युगहतिपुराणेषु विदितम्।
अतस्त्यक्त्वैव त्वां जडमतिरूपास्ते यमपरं स विप्रः पापीयान् बत तमपि दैवं न लभते ॥५७॥
सहिष्णुस्त्वं तावत् परशिव विभावैकसुलभः प्रसादस्ते हस्ते कृत इव झटित्येव भजताम्।
प्रसादश्च स्वामिन् प्रणतजनवाञ्छासमधिकस्त्वदीशं विश्वं तन्निधिरिव बुभूषोरपि भवान् ॥५८॥
महेश त्वत्पादाम्बुजयुगलसंसक्तमनसां महाभोगोत्कर्षः प्रथित इह तावत्सुकृतिनाम्।
परस्तानातागीत्यभवदनुचराणामपि पदं हरिब्रह्मादीनामुपरि कथयन्त्यागमविदः ॥५९॥
सुखं तद्भूमाख्यं निरतिशयमप्राकृतमपि प्रसादाद्यत्नं ते दृढभवमहारोगभिषजः।
उपायोऽत्र ज्ञानं खलु शिव विशुद्धात्मविषयं प्रसादे सत्येव प्रभुतिलक तेतत्र भवति ॥६०॥
अवश्यं कर्तव्ये तव शिव समाराधनविधा वनायासीद्वाञ्छा समधिकगलस्पर्शनचणे।
विहाय त्वां विश्वाधिक मृगयते देवमितरं विमूढः सेवायां शिव शिव न लङ्घ्यो हतविधिः ॥६१॥
भ्रमाल्लोभान्मोहान्मतदुरभिमानादपि मुधा नयन्त्यायुर्नाशं शिव तव पदाम्भोजविमुखाः।
वयं तावत्सर्वे सदसुतकलत्रादिभिरिमे भवामस्ते दासा इति मति मम स्यादिह दृढा ॥६२॥
इति विरचिता पद्यैः षष्ट्या पदम्बुरुहद्वये तव शिखरिणीमालालीला किरति समर्पिता।
अनुदिनमिमामित्थं सञ्चिन्त्य यः पठति प्रभो तव स लभतां साकं कुल्यैः कटाक्षकृपामृतम् ॥६३॥
क्वाहं मूढः क्व तव महिमा निर्जरैरप्रमेयः स्तोत्रव्याजादयमपि महान् केवलं मेऽपचारः।
किञ्च स्वामिन् सदसदपि वा भक्तिपूर्वं कृतं यद् भक्तिग्राह्यस्तदखिलमपि क्षाम्यसीतिश्रमोऽयम् ॥६४॥
यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम्।
तस्मै तमालरुचिभासुरकन्धराय नारायणीसहचराय नमः शिवाय ॥६५॥
इति श्रीकिरातकविकृता शिवशिखरिणीमाला पूर्णा
श्रीपद्मनाभविदुषः शिवभक्तिपूजा प्राप्ता शिवा शिखरिणी स्रगियं मयास्मिन्।
सिद्धाचले नृहरिणा हरिणेश्वरस्य क्रीडास्थले शिवकृतेऽसुभृतां प्रभूयात् ॥१॥
एषा किरातकविना कविनायकेन पुण्यास्तुतिः पशुपते रचिता हिमाले।
यस्मिन् किरातकुलदैवतमस्ति शम्भुः सिद्धाचले मृगवपुः पशुपाशनाशी ॥२॥
॥इति शिवशिखरिणीमाला॥

२. अथ शिवसहस्रनामप्रारम्भः

(यो शिवसहस्रनाम पद्मपुराण उत्तरखण्डमा रहेको शङ्करसंहिताबाट उद्धृत गरी प्रस्तुत गरिएको छ।)

व्यास उवाच

एकदा मुनयः सर्वे द्वारिकां द्रष्टुमागताः। वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥१॥
ततस्तु भगवान् प्रीतः पूजां चक्रे यथाविधि। तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥२॥
तैः पृष्टः कथयामास कुमारप्रभृतं च यत्। चरितं भूमिभारघ्नं लोकानन्दकरं परम् ॥३॥
मार्कण्डेयमुखाः सर्वे मध्याह्निकक्रियोत्थिता। कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥४॥
सूर्योपस्थानसन्ध्यां च स्मृतिधर्ममनुस्मरन्। शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभिः ॥५॥
चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम्। जय शङ्कर सोमेश रक्ष रक्षेति चाब्रवीत् ॥६॥
जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभो। अनन्यमानसः शान्तः पद्मासनपरः शुचिः ॥७॥
ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम्। मार्कण्डेयोऽवदत् कृष्णं बहुशो मुनिपुङ्गवः ॥८॥

मार्कण्डेय उवाच

त्वं विष्णुः कमलाकान्तः परमात्मा जगद्गुरुः। तव पूज्यः कथं शम्भुरेतत्सर्वं वदस्व मे ॥९॥

व्यास उवाच

अथ ये मनुयः सर्वे मार्कण्डेयं समर्चयन्।वचोभिर्वासुदेवस्य पृष्टं साधु त्वयेति च ॥१०॥

श्रीकृष्ण उवाच

साधु साधु मुने पृष्टं हिताय सकलस्य च। अज्ञातं तव नास्त्येव तथापि च वदाम्यहम् ॥११॥
दैवतं सर्वदेवानां सर्वकारणकारणम्। ज्योतिर्यत्परमानन्दं सावधानमतिः शृणु ॥१२॥
विश्वसाधनमीशानं गुणातीतमजं परम्। जगतस्तस्थुषो ह्यात्मा मम मूलं महामुने ॥१३॥
यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः। स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥१४॥
तस्मान्नान्यः परो देवस्त्रिषु लोकेषु विद्यते। सर्वज्ञः सर्वगः शम्भुः सर्वात्मा सर्वतोमुखः ॥१५॥
पठ्यते सर्ववेदान्ते सिद्धान्ते यो मुनीश्वरैः। तस्मिन्भक्तिर्महादेवे मम धातुश्च निर्मला ॥१६॥
महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः। सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥१७॥
निर्विकल्पो निराभासो निःसङ्गो निरूपद्रवः। निर्लेपः पुरुषाध्यक्षो महापुरुष ईश्वरः ॥१८॥
तस्य चेच्छाभवत्पूर्वं जगत्स्थित्यन्तकारिणी। वामाङ्गादभवत्तस्य सोऽयं विष्णुरिति स्मृतः ॥१९॥
जनयामास धातारं दक्षिणाङ्गात्सदाशिवः। मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥२०॥
तपस्तपन्तु भो वत्सा अब्रवीदिति ताञ्छिवः। ततस्ते शिवमात्मानं प्रोचुः संयतमानसाः ॥२१॥
स्तुत्वा तु विविधैः स्तोत्रैः प्रणम्य च पुनः पुनः।

ब्रह्मविष्णुरुद्रा ऊचुः

तपः केन प्रकारेण कर्तव्यं परमेश्वर ॥२२॥
ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि नापरः।

शिव उवाच

कायेन मनसा वाचा ध्यानपूजाजपादिभिः ॥२३॥
कामक्रोधादिरहितं तपः कुर्वन्तु भोः सुराः।

देवा ऊचुः

त्वया यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ॥२४॥
सौम्योपायमतो ब्रह्मन् वद कारुण्यवारिधे।

शिव उवाच

सहस्रनाम सद्विद्यां जपन्तु मम सुव्रताः ॥२५॥
यया संसारमग्नानां मुक्तिर्भवति शाश्वती। शृण्वन्तु तद्विधानं हि महापातकनाशनम् ॥२६॥
पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी। ब्रह्मचारी कृतस्नानः शुद्धवासा जितेन्द्रियः ॥२७॥
भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः। ध्यात्वा मां सकलाधीशं निराकारं मुनीश्वरम् ॥२८॥
पार्वतीसहितं शर्वं जटामुकुटमण्डितम्। वसानं चर्म वैयाघ्रं चन्द्रार्धकृतशेखरम् ॥२९॥

त्र्यम्बकं हि वृषारुढं कृत्तिवाससमुज्ज्वलम्। सुरार्चितपदद्वन्द्वे दिव्यभोगं सुसुन्दरम् ॥३०॥
बिभ्राणं सुप्रसन्नं च कुठारं च वराभयम्। दुर्द्धर्षं कमलासीनं नागयज्ञोपवीतिनम् ॥३१॥
विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम्। सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥३२॥
सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम्। जगद्योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥३३॥
दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम्। निशाकरकलाकान्तं भेषजं भवरोगिणाम् ॥३४॥
पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम्। कालात्मानं कालकालं देवदेवं महेश्वरम् ॥३५॥
ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम्। शाश्वतैश्वर्यसम्पन्नं महायोगीश्वरेश्वरम् ॥३६॥
समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम्। तारकं ब्रह्म सम्पूर्णमणीयासं महत्तमम् ॥३७॥
यतीनां परमं ब्रह्म यतीनां तपसः फलम्। संयमिहृत्समासीनं तपस्विजनसम्पदम् ॥३८॥
विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम्। महादेवं महात्मानं देवानामपि दैवतम् ॥३९॥

अथ शिवकवचप्रारम्भः

शान्तं पवित्रमोङ्कारं ज्योतिषां ज्योतिरुत्तमम्। शङ्करो मे शिरः पातु ललाटं भाललोचनः ॥४०॥
विश्वचक्षुर्दृशौ पातु रुद्रो मम भ्रुवावपि। गण्डौ पातु महेशानः श्रुती रक्षतु पूर्वजः ॥४१॥
कपालौ मे महादेवः पातु नासां सदाशिवः। मुखं पातु हविर्भोक्ता ओष्टौ पातु महेश्वरः ॥४२॥
दन्तान् रक्षतु देवेन्द्रस्तालुं सोमकलाधरः। रसनां परमानन्दः पातु गल्लौ शिवाप्रियः ॥४३॥
चिबुकं पातु मे शम्भुः श्मश्रून् शत्रुविनाशकः। कूर्चं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ॥४४॥
स्कन्धौ स्कन्दपतिर्बाहुं बहुहस्तधरः सदा। उपबाहुं महावर्यः करौ विबुधसत्तमः ॥४५॥
अंगुलीः पातु पञ्चास्यः पर्वाणि च सहस्रपात्। हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥४६॥
हुतभुक् पातु वस्तिं मे मध्यं मे मध्यमेश्वरः। कुक्षौ पातु भवानीशः कोष्ठं पातु कुलेश्वरः ॥४७॥
प्राणान् मे प्राणदः पातु नाभिं भीमः कटिं विभुः। सक्थिनी पातु मे भर्गो जानुनी जनकाधिपः ॥४८॥
जङ्घे पुररिपुः पातु चरणौ भवनाशनः। शरीरं पातु मे शर्वो बाह्यमाभ्यन्तरं शिवः ॥४९॥
इन्द्रियाणि हरः पातु सर्वत्र जयवर्द्धनः। पूर्वे पातु मृडः पातु दक्षिणे मधुसूदनः ॥५०॥
वारुण्यां सलिलाधीश उदीच्यां मे महीधरः। ईशान्यां पातु भूतेश आग्नेयां रविलोचनः ॥५१॥
नैर्ऋत्यां भूतभृत्पातु वायव्यां बलवर्द्धनः। ऊर्ध्वं पातु मखद्वेषी अधः संसारनाशनः ॥५२॥
सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः। एवं न्यासादिकं कृत्वा साक्षात्छम्भुमयो भवेत् ॥५३॥
नमो हिरण्यबाहवे इति पठेन्मन्त्रं तु भक्तितः।
नमो हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतये पशुपतये नमो नमः ॥५४॥
सद्यो जातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः ॥
वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः। कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः। सर्वभूतदमनाय नमो मनोन्मथाय नमः ॥५६॥
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥५७॥
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥५८॥
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम् ॥५९॥
सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात् सदाशिवम्। ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥६०॥
सर्वकार्यकरं पुण्यं महापातकनाशनम्। सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ॥६१॥
मन्त्राणां परमं मन्त्रं भवदुःखषडूर्मिहृत्।

अथाङ्गन्यासः

ॐ नमः शिवायेति षडङ्गन्यासः। ॐ नमः शम्भवाय च हृदयाय नमः।
ॐ नमो भवाय च शिरसे स्वाहा ॐ नमः शङ्कराय च शिखायै वषट्।
ॐ नमो मयस्कराय च कवचाय हुम् ॐ नमः शिवाय च नेत्रत्रयाय वौषट्।
ॐ नमः शिवाय शिवतराय च अस्त्राय फट् नमोस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने।
चतुर्मूर्त्तिवपुःस्थाय भूषिताङ्गाय शम्भवे।

ॐ अस्य श्रीवेदसाराख्यपरमदिव्यशिवसहस्रनामस्तोत्रमन्त्रस्य नारायण ऋषिः। अनुष्टुब्छन्दः। सदाशिवो देवता। ॐ नमः इति बीजम्। शिवायेति शक्तिः। चैतन्यमिति कीलकम्। सदाशिवप्रीत्यर्थे जपे विनियोगः।

अथ ध्यानम्

ॐ कोटिसूर्यप्रतीकाशं त्रिनेत्रं चन्द्रशेखरम्। शूलटङ्कगदाचक्रकुन्तपाशधरं विभुम्।

अथ सहस्रनाम

ॐ नमः पराय देवाय शङ्कराय महात्मने। कामिने नीलकण्ठाय निर्मलाय कपर्दिने ॥१॥
निर्विल्पाय शान्ताय निरहङ्कारिणे नमः। अनर्घ्याय विशालाय शूलहस्ताय ते नमः ॥२॥
निरञ्जनाय शर्वाय निःशंकाय परात्मने। नमः शिवाय भर्गाय गुणातीताय वेधसे ॥३॥
महादेवाय पीताय पार्वतीपतये नमः। कैवल्याय महेशाय विशुद्धाय बुधात्मने ॥४॥
कैवल्याय सुधेशाय निस्पृहाय सुरूपिणे। नमः सोमाय भूताय कालायामिततेजसे ॥५॥
अजराय जगत्पित्रे जनकाय पिनाकिने। निराधाराय सिंहाय मायातीताय ते नमः ॥६॥
बीजाय सर्वभूताय पशूनां पतये नमः। पुरन्दराय भद्राय पुरुषाय महीयसे ॥७॥
महासन्तोषरूपाय ज्ञानिने शुद्धबुद्धये। बुद्धाय बहुरूपाय ताराय परमात्मने ॥८॥
पूर्वजाय सुरेशाय ब्रह्मणेऽनन्तमूर्तये। निरक्षराय सूक्ष्माय कैलाशपतये नमः ॥९॥
निरामयाय कान्ताय निराकाराय ते नमः। सलिलात्मस्वरूपाय सोऽहं तत्त्वाय ते नमः ॥१०॥
निरालम्बाय नित्याय नित्यायाः पतये नमः। आत्मारामाय कव्याय पूज्याय परमेष्ठिने ॥११॥
विकर्तनाय भीमाय शम्भवे विश्वरूपिणे। हंसाय हंसनाथाय प्रसिद्धाय नमो नमः ॥१२॥
परात्पराय रुद्राय भवायालङ्घ्यशक्तये। इन्द्रहन्त्रे निधीशाय कालहन्त्रे मनस्विने ॥१३॥
विश्वमात्रे जगद्धात्रे जगन्नेत्रे नमो नमः। जटिलाय विरोगाय पवित्राय मृडाय च ॥१४॥
निरवद्याय धीराय निरातङ्काय ते नमः। नादाय रविनेत्राय व्योमकेशाय ते नमः।
चतुर्भोगाय साराय योगिनेऽनन्तमायिने ॥१५॥
धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने। गरिष्ठाय गिरीशाय वरदाय नमो नमः ॥१६॥
व्याघ्रचर्माम्बरायाथ दिशावस्त्राय ते नमः। परमार्थाय मात्राय प्रमथाय स्वचक्षुषे ॥१७॥
आद्याय शूलहस्ताय शितिकण्ठाय तेजसे। उग्राय वामदेवाय श्रीकण्ठाय च ते नमः ॥१८॥
विश्वेश्वराय सूर्याय गौरीशाय वराय च। मृत्युञ्जयाय वीराय वीरभद्राय ते नमः ॥१९॥
विरूपाक्षाय विधये वह्निनेत्राय ते नमः। जालन्धरशिरश्छेत्रे हविषे हितकारिणे ॥२०॥
महाकालाय वैद्याय घुसृणेशाय ते नमः। नमः ॐकाररूपाय सोमनाथाय ते नमः ॥२१॥
रामेश्वराय शुचये भीमेशाय नमो नमः। त्र्यम्बकाय निरीहाय केदाराय नमो नमः ॥२२॥
गङ्गाधराय कवये नागनाथाय ते नमः। भीमप्रियाय महसे रश्मीशाय नमो नमः ॥२३॥
पूर्णाय भूतपतये सर्वज्ञाय दयालवे। धर्माय धनदेशाय गजचर्माम्बराय च ॥२४॥
भालनेत्राय यज्ञाय श्रीशैलपतये नम। कृशानुरेतसे नीललोहिताय नमो नमः ॥२५॥
अन्धकासुरहन्त्रे च पावनाय बलाय च। चैतन्याय त्रिनेत्राय दक्षनाशकराय च ॥२६॥
नमः सहस्रशिरसे जयरूपाय ते नमः। सहस्रचरणायाथ योगिहृत्कुञ्जवासिने ॥२७॥
सद्योजाताय वन्द्याय सर्वदेवमयाय च। आमोदाय प्रगल्भाय गायत्रीवल्लभाय च ॥२८॥
व्योमाकाराय विप्राय नमो विप्रप्रियाय च। अघोराय सुवेशाय श्वेतरूपाय ते नमः ॥२९॥
विद्वत्तमाय वक्राय विश्वग्रासाय नन्दिने। अधर्मशत्रवे तापद्वन्द्वभीमथनाय च ॥३०॥
अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः। नमो ब्रह्मशिरश्छेत्रे पञ्चवक्त्राय खड्गिने ॥३१॥
हरिकेशाय विभवे पञ्चवर्णाय वज्रिणे। नमः पञ्चाक्षरायाथ गोवर्द्धनगताय च ॥३२॥
प्रभवे जनवीजाय कालकूटविषादिने। सिद्धेश्वराय सिद्धाय सहस्रनयनाय च ॥३३॥
नमः सहस्रहस्ताय सहस्रनयनाय च। सहस्रमूर्तये तुभ्यं विष्णवे जितशत्रवे ॥३४॥
काशीनाथाय गोप्त्रे ते नमस्ते विश्वसाक्षिणे। हेतवे सर्ववीजानां पालकाय नमो नमः ॥३५॥
जगत्संहारकाराय त्रिधावस्थाय ते नमः। एकादशस्वरूपाय नमस्ते बहुमूर्तये ॥३६॥
नरसिंहमहादर्पघातिने शरभाय च। भस्माभ्यक्ताय तीर्थाय जाह्नवीजनकाय च ॥३७॥

देवदानवदैत्यानां गुरवे ते नमो नमः। दलिताञ्जनभासाय नमो वायुस्वरूपिणे ॥३८॥
नमः स्वच्छस्वरूपाय प्रसिद्धाय नमो नमः। वृषध्वजाय गोष्ठ्याय जगद्यन्त्रप्रवर्त्तिने ॥३९॥
अनाथाय प्रजेशाय विष्णुगर्वहराय च। हरिविधातृकलहनाशकाय नमो नमः ॥४०॥
गदाहस्ताय वटवे गगनाय नमो नमः। कैवल्यफलदात्रे ते परमाय नमो नमः ॥४१॥
ज्ञानगम्याय ज्ञानाय घण्टारवप्रियाय च। पद्मासनाय पुष्टाय निर्वाणाय नमो नमः ॥४२॥
अयोनये सदेहाय ह्युत्तमाय नमो नमः। अन्तकालाधिपतये विशालाक्षाय ते नमः ॥४३॥
कुबेरबन्धवे तुभ्यं सोमाय सुखिने नमः। अमृतेशाय सौम्याय खेचराय च धन्विने ॥४४॥
प्रियंवदाय दक्षाय वन्दिने विभवाय च। गिरीशाय गिरित्राय गिरिशान्ताय ते नमः ॥४५॥
पारिजाताय बृहते पञ्चयज्ञाय ते नमः। तरुणाय विशिष्टाय बालरूपधराय च ॥४६॥
जीवितेशाय पुष्टाय पुष्टानां पतये नमः। भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः ॥४७॥
मध्यमाय विधात्रे च शूराय सुभगाय च। आदित्यतापनाथाय पुण्यश्लोकाय ते नमः ॥४८॥
महाह्रदाय ह्रस्वाय वामनाय नमो नमः। नमस्तत्पुरुषायाथ चतुर्हस्ताय मायिने ॥४९॥
नमो धूर्जटये तुभ्यं जगदीशाय ते नमः। जगन्नाथाय महसे लीलाविग्रहधारिणे ॥५०॥
अभयाय नमस्तुभ्यममराय नमो नमः। अताम्राय नमस्तुभ्यमक्षयाय नमो नमः ॥५१॥
लोकाध्यक्ष नमस्तुभ्यमनादिनिधनाय च। व्यक्तोत्तराय व्यक्ताय नमस्ते परमाणवे ॥५२॥
लघवे स्थूलरूपाय नमः परशुधारिणे। नमः खट्वाङ्गहस्ताय नागहस्ताय ते नमः ॥५३॥
वरदाभयहस्ताय घण्टाहस्ताय ते नमः। घस्मराय नमस्तुभ्यमजिताय नमो नमः ॥५४॥
अणिमादिगुणेशाय पञ्चब्रह्ममयाय च। पुरातनाय शुद्धाय बलप्रमथनाय च ॥५५॥
पुण्योदयाय पद्माय विमुक्ताय नमो नमः। उदाराय विचित्राय विचित्रगतये नमः ॥५६॥
वाग्विशुद्धाय चितये निर्गुणाय नमो नमः। परमेशाय शेषाय नमः परतराय च ॥५७॥
महेन्द्राय सुशीलाय करवीरप्रियाय च। महापराक्रमायाथ नमस्ते कालरूपिणे ॥५८॥
विष्टरश्रवसे लोकचूडारत्नाय ते नमः। सम्राजे कल्पवृक्षाय करुणाय नटाय च ॥५९॥
अनर्घ्याय वरेण्याय वज्ररूपाय ते नमः। परमज्योतिषे पद्मगर्भाय सलिलाय च ॥६०॥
तत्त्वाधिकाय तत्त्वाय नमो दीर्घाय रङ्गिणे। नमस्ते पाण्डुरङ्गाय गौराय ब्रह्मचारिणे ॥६१॥
अणवे निष्कलायाथ सामगानप्रियाय च। नमोऽक्षयाय क्षेत्राय नमस्ते पुण्यमूर्तये ॥६२॥
कलाधराय पूज्याय पञ्चभूतात्मने नमः। निर्वाणाय च तथ्याय पापनाशकराय च ॥६३॥
विश्वतश्चक्षुषे कालयोगिनेऽनन्तरूपिणे। सिद्धसाधकरूपाय नमो मेदिनिरूपिणे ॥६४॥
अगण्याय प्रतापाय सुधाहस्ताय ते नमः। श्रीवल्लभाय निधये स्थाणवे मधुराय च ॥६५॥
उपाधिरहितायाथ नमः सुकृतराशये। नमो मुनीश्वरायाथ शिवानन्दाय ते नमः ॥६६॥
रिपुघ्नाय नमस्तेजोराशयेऽनुत्तमाय च। चतुर्मूर्तिवपुःस्थाय नमो बुद्धीन्द्रियात्मने ॥६७॥
उपद्रवहरायाथ प्रियसंदर्शनाय च। भूतनाथाय भूताय वीतरागाय ते नमः ॥६८॥
नैष्कर्म्याय निरूपाय षड्वक्त्राय विशुद्धये। कुलेशाय भूतभृते भुवनेशाय ते नमः ॥६९॥
हिरण्यबाहवे जीववरदाय नमो नमः। आदिदेवाय भर्गाय चन्द्रसञ्जीवनाय च ॥७०॥
हराय बहुरूपाय प्रसन्नाय नमो नमः। आनन्दभरितायाथ कूटस्थाय नमो नमः ॥७१॥
नमो मोक्षफलायाथ शाश्वताय विरागिणे। यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥७२॥
नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः। विश्वगर्भाय गर्भाय वेदगर्भाय ते नमः ॥७३॥
संसारार्णवमग्नानां दुःखसंसारसेतवे। मुनिप्रियाय जीवाय मूलप्रकृतये नमः ॥७४॥
समस्तबन्धवे तेजोमूर्तये ते नमो नमः। आश्रमस्थापकायाथ वर्णिने सुन्दराय च ॥७५॥
मृगबाणार्पणायाथ शारदावल्लभाय च। विचित्रमायिने तुभ्यमलङ्करिष्णवे नमः ॥७६॥
बहिर्मुखमहादर्पमथनाय नमो नमः। नमोऽष्टमूर्तये तुभ्यं निष्कलङ्काय ते नमः ॥७७॥
नमो हव्याय भोज्याय यज्ञनाथाय ते नमः। नमो मध्याय मुख्याय वसिष्ठाय नमो नमः ॥७८॥
अम्बिकापतये तुभ्यं महादन्ताय ते नमः। सत्यप्रियाय सत्याय प्रियनृत्याय ते नमः ॥७९॥
नित्यतृप्ताय वेदित्रे मृगहस्ताय ते नमः। अर्द्धनारीश्वरायाथ कुठारयुतपाणये ॥८०॥

वराभयप्रदात्रे ते बहुरूपाय ते नमः। महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः ॥८१॥
नमः कृतागमायाथ वेदान्तपठिताय च। अश्रोत्राय श्रुतिमते बहुश्रुतितराय च ॥८२॥
अव्रणाय नमस्तुभ्यं गन्धायाग्रहकारिणे। पादहीनाय वोढाय सर्वत्रगतये नमः ॥८३॥
अक्षाय जननेत्राय नमस्तुभ्यं चिदात्मने। रसज्ञाय नमस्तुभ्यं रसनारहिताय च ॥८४॥
अमूर्तायाथ मूर्त्ताय सदसस्पतये नमः। जितेन्द्रियाय तथ्याय परज्योतिःस्वरूपिणे ॥८५॥
नमस्ते सर्वमर्त्यानामादिकर्त्रे दयालवे। सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥८६॥
नमोऽन्तर्यामिणे सर्वहृदिस्थाय नमो नमः। चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ॥८७॥
वामदक्षिणपार्श्वाय लोकेशहरिशालिने। नमः सकलकल्याणदायिने प्रसवाय च ॥८८॥
स्वभासे मारधीराय सूत्रकाराय ते नमः। विषयार्णवमग्नानां समुद्धरणसेतवे ॥८९॥
अस्नेहस्नेहरूपाय वार्ताविक्रान्तवर्त्तिने। यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः ॥९०॥
नमो महार्णवायाथ भास्कराय नमो नमः। भक्तिगम्याय भक्तानां सुलभाय नमो नमः ॥९१॥
दुष्प्रधर्षाय दुष्टानां विज्ञेयाय विवेकिनाम्। अलौकिकाय लोकाय ह्यलोकाय नमो नमः ॥९२॥
पूरयित्रे विशेषाय कुशलाय शुभाय च। नमः कर्पूरगौराय सर्पहाराय ते नमः ॥९३॥
नमः संसारपाराय कमनीयाय ते नमः। वह्निदर्पविघाताय वायुदर्पविघातिने ॥९४॥
जरातिगाय वीर्याय वेद्याय व्यापिने नमः।सूर्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥९५॥
चन्द्रकोटिसुशीताय कपिलाय नमो नमः। नमो गूढस्वरूपाय निश्चलाय पराय च ॥९६॥
नमः सत्यप्रतिज्ञाय नमस्ते सुसमाधये। एकरूपाय शून्याय विश्वनाभिह्रदाय च ॥९७॥
पूर्वोत्तमाय लोकाय प्राणाय सुहृदे नमः। नमः परापरायाथ चिन्मात्राय नमो नमः ॥९८॥
ध्यानगम्याय ध्येयाय ध्यानरूपाय ते नमः। नमस्ते शाश्वतैश्वर्यविभवाय नमो नमः ॥९९॥
नमः प्राणेश्वरायाथ सर्वशक्तिधराय च। धर्माधाराय धन्याय पुष्कलाय नमो नमः ॥१००॥
प्रतिष्ठायै धर्मगोप्त्रे निधनायाग्रजाय च। योगेश्वराय योगाय योगगम्याय ते नमः ॥१०१॥
महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः। महर्षिवन्दितायाथ प्रकाशाय सुधर्मिणे ॥१०२॥
नमो हिरण्यगर्भाय नमो हिरण्मयाय च। जगद्बीजाय हाराय सेव्याय ऋतवे नमः ॥१०३॥
आधिपत्याय कामाय स्वराय यशसे नमः। नमः प्रचेतसे ब्रह्ममयाय सकलाय च ॥१०४॥
नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये। योगात्मनेऽचिन्तिताय दिव्यनृत्याय ते नमः ॥१०५॥
जगतामेकनाथाय मायाबीजाय ते नमः। सर्वहृत्सन्निविष्टाय ब्रह्मचक्रभ्रमाय च ॥१०६॥
ब्रह्मनन्दाय भवते ब्रह्मणाय नमो नमः। भूमिभारार्तिसंहर्त्रे भवसारथये नमः ॥१०७॥
हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च। दुर्वाससे षड्विकाररहिताय नमो नमः ॥१०८॥
नमो देहार्द्धकान्ताय षडूर्मिरहिताय च।प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ॥१०९॥
अनन्तकोटिब्रह्माण्डनायकाय नमो नमः। एकाकिने निर्मलाय द्रविणाय दमाय च ॥११०॥
नमस्त्रिलोचनायाथ शिपिविष्टाय बन्धवे। त्रिविष्टपेश्वरायाथ नमो व्याघ्रेश्वराय च ॥१११॥
विश्वेश्वराय दात्रे ते नमश्चण्डेश्वराय च। व्यासेश्वराय बुधिने कण्डुकेशाय ते नमः ॥११२॥
योगेश्वराय च नमो दिवोदासेश्वराय च। नागेश्वराय न्यायाय न्यायनिर्वाहकाय च ॥११३॥
शरण्याय सुपात्राय कालचक्रप्रवर्त्तिने। विचक्षणाय द्रंष्ट्राय श्वेताश्वाय नमो नमः ॥११४॥
नीलजीमूतदेहाय परात्मज्योतिषे नमः। शरणागतपालाय महाबलपराय च ॥११५॥
सर्वपापहरायाथ महाबलपराय ते नमः। कृष्णस्य जयदात्रे ते बिल्वकेशाय ते ॥११६॥
दिव्यभोगाय दण्डाय को विदाय नमो नमः। कामपालाय चित्राय विचित्राय नमो नमः ॥११७॥
नमो मातामहायाथ नमस्ते मातरिश्वने। निःसङ्गाय सुनेत्राय विघ्नेशाय जयाय च ॥११८॥
व्याजसंमर्दनायाथ मध्यस्थाय नमो नमः। अङ्गुष्ठशिरसा लङ्कानाथदर्पहराय च ॥११९॥
व्याघ्रपुरनिवासाय नमः सर्वेश्वराय च। नमः परावरेशाय जगत्स्थावरमूर्त्तये ॥१२०॥
नमोऽप्यणुप्रमेयाय शार्ङ्गिणे विष्णुमूर्त्तये। नारायणाय वामाय सुदीप्ताय नमो नमः ॥१२१॥
नमो ब्रह्माण्डमालाय गोधराय वरूथिने। घण्टानादाय सूत्राय नमः पातालवासिने ॥१२२॥
नमस्ताराधिनाथाय वागीशाय नमो नमः। सदाचाराय गौराय पुराणपुरुषाय च ॥१२३॥

संसारमोचकायाथ वर्णिने लिङ्गरूपिणे। सच्चिदानन्दरूपाय पापराशिहराय च ॥१२४॥
अतर्क्यायाप्रमेयाय प्रमाणाय नमो नमः। कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ॥१२५॥
गजारये विदेहाय त्रिलिङ्गरहिताय च। नमो राजाधिराजाय चैतन्यविभवाय च ॥१२६॥
नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च। मयोभवे च दुर्ज्ञाय समर्थाय च यज्वने ॥१२७॥
क्षेत्रेश्वराय रुचये नमो नक्षत्रमालिने। अनर्थनाशकायाथ भस्मलेपकराय च ॥१२८॥
सदानन्दाय विदुषे सुगुणाय विरोधिने। दुर्गमाय शुभाङ्गाय मृगव्याधाय ते नमः ॥१२९॥
प्रियाय धर्मधाम्ने ते प्रयागाय विभागिने। आद्यायामृतपानाय सोमपाय तपस्विने ॥१३०॥
नमो विचित्रवेषाय पुष्टिसंवर्द्धनाय च। चिरन्तनाय धनुषे स्थविराय ध्रुवाय च ॥१३१॥
नियमायाग्रगण्याय व्योमातीताय ते नमः। संवत्सराय लोप्याय स्थानदाय स्थविष्णवे ॥१३२॥
व्यावसाय फलान्ताय महाकर्त्रे प्रियाय च। गुणत्रयस्वरूपाय नमः सिद्धिस्वरूपिणे ॥१३३॥
नमो नमःस्वरूपाय स्वच्छाय पुरुषाय च। कालान्तराय वेदाय नमो ब्रह्माण्डरूपिणे ॥१३४॥
अनित्यनित्यरूपाय तदन्तर्वर्त्तिने नमः। समस्तार्थाय कुल्याय पुण्याय पटवे नमः ॥१३५॥
पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने। विशृङ्खलाय पूर्णाय नमस्ते विषयात्मने ॥१३६॥
अनवद्याय शस्त्राय स्वतन्त्रायामृताय च। नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः ॥१३७॥
मन्त्रज्ञाय प्रभावाय प्रदीपविमलाय च। वश्वपाशाय दक्षाय वेदःनिःश्वसिताय च ॥१३८॥
यज्ञाङ्गाय सुवीराय नागचूडाय ते नमः। व्याधाय वाणहस्ताय स्कन्धाय पक्षिणे नमः ॥१३९॥
क्षेत्रज्ञाय रहस्याय स्वस्थाय च वरीयसे। गहनाय विरामाय सिद्धान्ताय नमो नमः ॥१४०॥
महीधराय होत्रे ते वटवृक्षाय ते नमः। ज्ञानदीपाय दुर्गाय सिद्धान्तनिश्चयाय च।
श्रीमते मुक्तिबीजाय कुशलाय विलासिने ॥१४१॥
प्रेरकाय विशोकाय हविर्द्धनाय ते नमः। गम्भीराय सहायाय भोजनाय सुभोगिने ॥१४२॥
महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे। नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः ॥१४३॥
परमार्थाय शिशिरे प्रांशवे च कपालिने। सहजाय गृहस्थाय सन्धायानाथाय जिष्णवे ॥१४४॥
षड्भिः सुपूजितायाथ विदलासुरघातिने। जनानन्दाय योग्याय कायेशाय किरीटिने ॥१४५॥
अमोघविक्रमायाथ नग्नाय दलघातिने। सङ्ग्रामाय नरेशाय शुचिहास्याय ते नमः।
भूतिप्रियाय भूम्ने ते श्येनाय मधुराय च ॥१४६॥
मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने। निर्लेपाय जटार्द्राय महाकालाय भीरवे ॥१४७॥
नमो विरुरूपाय शक्तिगम्याय ते नमः। नमः शर्वाय सदसत्पराय सुव्रताय च ॥१४८॥
नमो भक्तिप्रियायाथ श्वेतरक्षापराय च। सुकुमारमहापापहराय रथिने नमः ॥१४९॥
नमस्ते धर्मराजाय धनाध्यज्ञाय सिद्धये। महाभूताय कल्पाय कल्पनारहिताय च ॥१५०॥
ख्याताय जितविश्वाय गोकर्णाय सुचारवे। श्रोत्रियाय वदान्याय दुर्बलाय कुटुम्बिने ॥१५१॥
विरजाय सुगन्धाय नमो विश्वम्भराय च। भवातीयाय षष्ठाय नमस्ते सामगाय च ॥१५२॥
अद्वैताय द्वितीयाय कल्पराजाय भोगिने। चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥१५३॥
सर्वभोगसमृद्धाय साम्बाय च नमो नमः। नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥१५४॥
सर्वज्ञमूर्तये तुभ्यं हिरण्यरेतसे नमः। शारदाय सुशीलाय कौशिकाय धनाय च ॥१५५॥
अभिरामाय तत्त्वाय व्यक्तकल्पाय ते नमः। अरिष्टमथनायाथ सुप्रतीकाय ते नमः ॥१५६॥
प्रांशवे ब्रह्मगर्भाय वरुणायेन्दवे नमः। नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥१५७॥
अहिर्वुध्न्यायाजराय गुह्येशाय सुशान्तये। नमः समयनाथाय सोमपाय गुहाय च ॥१५८॥
निर्मलाय नमस्तुभ्यं छन्दःसाराय दंष्ट्रिणे। ज्योतिर्लिङ्गाय पित्रे च जगत्सुहितकारिणे ॥१५९॥
नमः कारुण्यनिधये श्लोकाय जयशालिने। ज्ञानोदराय बीजाय जनविश्रामहेतवे ॥१६०॥
अवधूताय शिष्टायच्छन्दसां प्रभवे नमः। नमः फेण्याय गुह्याय सर्वबन्धविमोचिने ॥१६१॥
उदारकीर्तये शश्वत्प्रसन्नवदनाय च। वसवे वेदकाराय नमो भ्राजिष्णुविष्णवे ॥१६२॥
चक्रिणे देवदेवाय गदाहस्ताय पत्रिणे। नमस्ते पारिजाताय गणाधिपतये नमः ॥१६३॥
सर्वशाखाधिपतये प्रजनेशाय ते नमः। सूक्ष्मप्रमाणमूर्ताय सुरपार्श्वगताय च ॥१६४॥

अशरीराय शुक्राय सर्वान्तर्यामिणे नमः। सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥१६५॥
मुनिध्येयाय मुनये बीजस्थाय मरीचये। चामुण्डजनकायाथ नमस्ते कृत्तिवाससे ॥१६६॥
व्योमकेशाय योग्याय धर्मपीठाय ते नमः। महावीर्याय दीप्ताय बुद्धाय शनये नमः ॥१६७॥
शिष्टेष्टाय मघवते केतवे करुणाय च। कारणाय भगवते बाणदर्पहराय च ॥१६८॥
अतीन्द्रियाय रम्याय ज्ञानानन्दकराय च। सदाशिवाय धौम्याय चिन्त्याय चन्द्रमौलिने ॥१६९॥
नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः। ज्योतिषे कुण्डलीशाय वरदायाचलाय च ॥१७०॥
वसन्ताय सुरभये जवारिमथनाय च। प्रेतपुरञ्जयायाथ पृषदश्वाय ते नमः ॥१७१॥
रोचिष्णवे सुरजिते श्वेतपीताय ते नमः। नमस्ते चञ्चरीकाय तामिस्रमथनाय च ॥१७२॥
प्रमाथिने निदाघाय चित्रगर्भाय ते नमः। शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥१७३॥
निरवद्याय दानाय विचित्रशक्तये नमः। नमस्तुल्याय महसे वितानपतये नमः ॥१७४॥
अहंकारस्वरूपाय मेधाधिपतये नमः। विक्रमाय स्वतन्त्राय स्वन्त्रगतये नमः ॥१७५॥
अपाराय तत्त्वविदे क्षयद्वीराय ते नमः। पञ्चास्याय वदान्याय विश्वप्राणेश्वराय च ॥१७६॥
अगोचराय सूक्ष्माय ज्ञेयाय वडवाग्नये। फेण्याय पद्महस्ताय नमस्ते जमदग्नये ॥१७७॥
अनावृताय मुक्ताय मातृकापतये नमः। नमस्ते बीजकोशाय तीव्रानन्दाय मुक्तये ॥१७८॥
नमस्ते विश्वदेवाय शान्तरागाय ते नमः। विलोचनाय तोयाय हेमगर्भाय ते नमः ॥१७९॥
अनाद्यन्ताय चण्डाय मनोनाथाय ते नमः। ज्ञानस्कन्धाय तुष्टाय कपिलाय महर्षये ॥१८०॥
नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः। नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥१८१॥
स्वभावाय सुवासाय ह्यन्तरङ्गाय ते नमः। नमस्ते शिवधर्माय महाधर्माय ते नमः ॥१८२॥
प्रसन्नाय नमस्तुभ्यं सर्वान्तर्ज्योतिषे नमः। स्वयम्भुवे कुलेशाय यक्षराक्षससन्महे ॥१८३॥

श्रीमहादेव उवाच

जपन्तु सततं देवा नाम्नां दशशतीमिमाम्। मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥१८४॥
संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम्। यः पठेच्छ्रृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥१८५॥
पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राज्यताम्। प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥१८६॥
शिवालये नदीतीरेऽश्वत्थमूले विशेषतः। प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥१८७॥
धनकामस्तु जुहुयाद्घृताक्तैर्बिल्वपत्रकैः। मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥१८८॥
पुत्रकामस्तु जुहुयात् तिलाज्येन तथान्धसा। आयुःकामस्तु जुहुयादाज्येन मधुना तथा ॥१८९॥
मत्समीपे प्रदोषे च स्पृष्ट्वा भक्त्या जपत्यथ। जीवन्सरूपतो प्रेत्य सायुज्यं समवाप्नुयात् ॥१९०॥
कालोऽपि जनशास्ता हि मम भक्तं न लुम्पति ।अहमीशः सुराः कस्य नेष्यामि गतकल्मषम् ॥१९१॥
त्रिसन्ध्यासु जपेद् भक्त्या वत्सरं नियमान्वितैः ।मच्चितो मन्मना भूत्वा सर्वैरोगैः प्रमुच्यते ॥१९२॥
रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः ।सत्सर्वं प्राप्यते पुंभिरेकाग्रमनसाऽमराः ॥१९३॥
अश्वमेधसहस्रत्य यत्फलं लभते नरः ।कपिलाशतदानस्य तत्फलं पठनाद् भवेत् ॥१९४॥
कन्याकोटिप्रदानस्य यत्फलं लभते नरः ।तत्फलं लभते सम्यङ्नाम्नो दशशतीजपात् ॥१९५॥
यः शृणोति महाविद्यां श्रावयेद्वाऽपि भक्तितः ।सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥१९६॥
यक्षराक्षससेवतालग्रहकूष्माण्डभैरवाः ।पठनादस्य नश्यन्ति जीवेच्च शरदां शतम् ॥१९७॥
ब्रह्महत्यादिपापानां नाशः स्याच्छ्रवणेन च। किं पुनः पठनादस्य मुक्तिः स्यादनपायिनी ॥१९८॥
इतयुक्त्वा स महादेवो भगवान् परमेश्वरः ।पुनरप्याह भगवान्कृपया परया सुराः ॥१९९॥
दीयतामात्मभक्तेभ्यो यदुक्तं भवघातकम् ।इतयुक्त्वान्तर्दधे देवः परमानन्दरूपवान् ॥२००॥

श्रीकृष्ण उवाच –

एतदेव पुरा रामो लब्धवान्कुम्भसंभवात् ।अरण्ये दण्डकाख्ये तु प्रजजाप रघूद्वहः ॥२०१॥
नित्यं त्रिषवणस्नायी त्रिसन्ध्यं संस्मरञ्शिवम् ।तदासौ देवदेवोऽपि प्रत्यक्षं प्राह राघवम् ॥२०२॥
इदं पाशुपतं दिव्यं प्रगृहाण रघूद्वह। एतदासाद्य पौलस्त्यं जहि मा शोकमर्हसि ॥२०३॥
तदाप्रभृति भो देवाः प्रजपामि सुभक्तितः ।गृह्णन्तु परया भक्त्या भवन्तः सर्व एव हि ॥२०४॥

श्रीवेदव्यास उवाच –

ततस्ते ऋषयः सर्वे जगृहुर्मुनिपुङ्गवाः ।सहस्रनामसद्विद्यां भक्तियुक्तेन चेतसा ॥२०५॥

एतद्वः कथितं सर्वं हितार्थं मुनिसत्तमाः।गृह्णन्तु मम वाक्येन मुक्तिं प्राप्स्यथ निश्चितम् ॥२०६॥
भवद्भिरात्मशिष्येभ्यो दीयतामिदमादरात् ।नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥२०७॥
अविमुक्तं तु तद्गेहं तत्र तिष्ठति शङ्करः। अनेन मन्त्रितं भस्म दुष्टदुःखविघातकम् ॥२०८॥
पिशाचस्य विनाशाय जप्तव्यमिदमुत्तमम् ।नाम्नां तेन सहस्रेण समं किञ्चिन्न विद्यते ॥२०९॥

॥ इति श्रीपद्मपुराणे उत्तरखण्डे शङ्करसंहितायां श्रीकृष्णमार्कण्डेयसंवादे वेदसाराख्यं परमदिव्यं शिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥

॥ ॐ शिवाय नमः ॥

३. पशुपतिस्तोत्रप्रारम्भः

**(भगवान् पशुपति पञ्च ब्रह्मरूप पाँच मुखद्वारा सुहाउनुभएको छ। यस शीर्षकका आठ पद्यमा उहाँलाई नमन गरिएको छ।)**

॥ ॐ शिवाय नमः ॥

पशुपतीन्दुपतिं धरणीपतिं भुजगलोकपतिं च सतीपतिम् ॥ प्रणतभक्तजनार्तिहरं परं भजत रे मनुजा गिरजापतिम् ॥१॥
न जनको जननी न च सोदरो न तनयो न च भूरिधनं कुलम्। अवति कोऽपि न कालवशं गतं भजत रे मनुजा गिरजापतिम् ॥२॥
मुरजडिण्डिमवाद्यविलक्षणं मधुरपञ्चमनादविशारदम्। प्रमथभूतगणैरपि सेवितं भजत रे मनुजा गिरजापतिम् ॥३॥
शरणदं सुखदं शरणान्वितं शिव शिवेति शिवेति नतं नृणाम्। अभयदं करुणावरुणालयम् भजत रे मनुजा गिरजापतिम् ॥४॥
नरशिरोरचितं मणिकुण्डलं भुजगहारमुदं वृषभध्वजम्। चितिरजोधवलीकृतविग्रहं भजत रे मनुजा गिरजापतिम् ॥५॥
मखविनाशकरं शशिशेखरं सततमध्वरभाजि फलप्रदम्। प्रलयदग्धसुरासुरमानवम् भजत रे मनुजा गिरजापतिम् ॥६॥
मदमपास्य चिरं हृदि संस्थितं मरणजन्मजराभयपीडितम्। जगदुदीक्ष्य समीपभयाकुलं भजत रे मनुजा गिरजापतिम् ॥७॥
हरिविरञ्चिसुराधिपपूजितम् यमजलेशधनेशनमस्कृतम्। त्रिनयनं भुवनत्रितयाधिपं भजत रे मनुजा गिरजापतिम् ॥८॥
पशुपतेरिदमष्टकमद्भुतं विरचितं पृथिवीपतिसूरिणा। पठति संशृणुते मनुजः सदा शिवपुरीं वसते लभते मुदम् ॥९॥

॥ इति श्रीपशुपत्यष्टकं सम्पूर्णम् ॥

४. शिवाष्टकप्रारम्भः

**(यस शीर्षकमा भगवान् पशुपतिनाथ, विश्वनाथ आदिका रूपमा संसारमा प्रसिद्ध हुनुभएका परब्रह्मस्वरूप शिवको स्तुति गरिएको छ।)**

॥ ॐ शिवाय नमः ॥

प्रभुं प्राणनाथं विभुं विश्वनाथं जगन्नाथनाथं सदानन्दभाजम्। भवद्भव्यभूतेश्वरं भूतनाथं शिवं शङ्करं शम्भुमीशानमीडे ॥१॥
गले मुण्डमालं तनौ सर्पजालं महाकालकालं गणेशाधिपालम्।
जटाजूटगङ्गोत्तरङ्गैर्विशालं शिवं शङ्करं शम्भुमीशानमीडे ॥२॥
मुदामाकरं मण्डनं मण्डयन्तं महामण्डलं भस्मभूषाधरन्तम्। अनादिं ह्यपारं महामोहपारं शिवं शङ्करं शम्भुमीशानमीडे ॥३॥
तटाधोनिवासं महाट्टाट्टहासं महापापनाशं सदा सुप्रकाशम्। गिरीशं गणेशं सुरेशं महेशम् शिवं शङ्करं शम्भुमीशानमीडे ॥४॥
गिरीन्द्रात्मजासङ्गृहीतार्धदेहं गिरीशस्थितं सर्वदा सन्नमेहम्।
परब्रह्म ब्रह्मादिभिर्वन्द्यमानम् शिवं शङ्करं शम्भुमीशानमीडे ॥५॥
कपालं त्रिशूलं कराभ्यां दधानं पदाम्भोजनम्राय कामं ददानम्।
बलीवर्दयानं सुराणां प्रधानं शिवं शङ्करं शम्भुमीशानमीडे ॥६॥
शरच्चन्द्रगात्रं गणानन्दपात्रं त्रिनेत्रं पवित्रं धनेशस्य मित्रम्।
अपर्णाकलत्रं चरित्रं विचित्रं शिवं शङ्करं शम्भुमीशानमीडे ॥७॥
हरं सर्पहारं चिताभूविहारं भवं वेदसारं सदा निर्विकारम्।
स्मशाने वसन्तं मनोजं दहन्तं शिवं शङ्करं शम्भुमीशानमीडे ॥८॥
स्तवं यः प्रभाते नरः शूलपाणेः पठेत्सर्वदा भर्गभावानुरक्तः।
सुपुत्रं धनं धान्यमित्रं कलत्रं विचित्रं समासाद्य मोक्षं प्रयाति ॥९॥

॥ इति शिवाष्टकं सम्पूर्णम् ॥

५. अथ शिवमानसपूजाप्रारम्भः

**(शिवमानसपूजा शीर्षकमा कुनै पनि भक्तले आफ्नो मनद्वारा वस्तुहरूको कल्पना गरी भगवान् शिवको आराधना गर्न सक्छ। त्यसो गर्दा उसका पाप र तापको शमन हुन्छ भन्ने आशयलाई प्रस्तुत गर्ने पाँच पद्यहरू ज्यादै महत्वपूर्ण मानिएका छन्।)**

ॐ शिवाय नमः

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥१॥
सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम्
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलम् ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥
छत्रंचामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा
साष्टाङ्गप्रणतिः स्तुतिर्बहुविधा ह्येतत्सामस्तं मया सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥३॥
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थिति–
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥४॥
करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वापराधम्
विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो ॥५॥

॥ इति श्रीशिवमानसपूजा सम्पूर्णा ॥

६. अथ लिङ्गाष्टकस्तोत्रप्रारम्भः

**(लिङ्गका रूपमा प्रकट हुने एकमात्र देवता भगवान् शङ्करको लिङ्गस्वरूपलाई महत्त्व दिएर यस स्तोत्रमा स्तवन गरिएको छ। यस स्तोत्रका विभिन्न पद्यहरूबाट सम्पूर्ण देवता, महापुरुषहरूद्वारा आराधना गरिएका भगवान् शङ्करलाई प्रणाम गर्दछु भनी आत्मसमर्पण गर्दा भक्तले शिवलोक प्राप्त गर्ने तथ्य बताइएको छ।)**

॥ ॐ शिवाय नमः ॥

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभाषितशोभितलिङ्गम्। जन्मजदुःखविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥१॥
देवमुनिप्रवरार्चितलिङ्गं कामदहं करुणाकरलिङ्गम्। रावणदर्पविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥२॥
सर्वसुगन्धिसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम्। सिद्धसुरासुरवन्दितलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥३॥
कनकमहामणिभूषितलिङ्गं फणिपतिवेष्टितशोभितलिङ्गम्। दक्षसुयज्ञविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥४॥
कुंकुमचन्दनलेपितलिङ्गं पङ्कजहारसुशोभितलिङ्गम्। सञ्चितपापविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥५॥
देवगणार्चितसेवितलिङ्गं भावैर्भक्तिभिरेव च लिङ्गम्। दिनकरकोटिप्रभाकरलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥६॥
अष्टदलैःपरिवेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम्। अष्टदरिद्रविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥७॥
सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसदार्चितलिङ्गम्। परात्परं परमात्मकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ॥८॥
लिङ्गाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ। शिवलोकमवाप्नोति शिवेन सह मोदते ॥९॥

७. अथ वेदसारशिवस्तवप्रारम्भः

**(११ पद्यहरूबाट निर्मित वेदसारशिवस्तवमा भगवान् विश्वनाथलाई महत्व दिएर शिवतत्वको प्रशंसा, वन्दना र आराधना गरिएको छ।)**

॥ ॐ शिवाय नमः ॥

पशूनां पतिं पापनाशं परेशं गजेन्द्रस्य कृत्तिं वसानं वरेण्यम्।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं महादेवमेकं स्मरामि स्मरारिम् ॥१॥
महेशं सुरेशं सुरारातिनाशं विभुं विश्वनाथं विभूत्यंगभूषम्।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं सदानन्दमीडे प्रभुं पञ्चवक्त्रम् ॥२॥
गीरीशं गणेशं गले नीलवर्णं गजेन्द्राधिरूढं गुणातीतरूपम्।
भवं भास्वरं भस्मना भूषिताङ्गं भवानीकलत्रं भजे पञ्चवक्त्रं ॥३॥
शिवाकान्त शम्भो शशाङ्कार्धमौले महेशान शूलिन् जटाजूटधारिन्।

त्वमेको जगद्व्यापको विश्वरूपः प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥
परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोंकारवेद्यम्।
यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम् ॥५॥
न भूमिर्न चापो न वह्निर्न वायु र्न चाकाशमास्तेन तन्द्रा न निद्रा।
न ग्रीष्मो न शीतं न देशो न वेशो न यस्यास्ति मूर्तिस्त्रिमूर्तिन्तमीडे ॥६॥
अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम्।
तुरीयं तमःपारमाद्यन्तहीनं प्रपद्ये परं पावनं द्वैतहीनम् ॥७॥
नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानन्दमूर्ते।
नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥
प्रभो शूलपाणे विभो विश्वनाथ महादेव शम्भो महेश त्रिनेत्र।
शिवाकान्त शान्त स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥९॥
शम्भो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन्।
काशीपते करुणया जगदेतदेकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥१०॥
त्वत्तो जगद्भवति देव भव स्मरारे त्वयेव तिष्ठति जगन्मृड विश्वनाथ।
त्वयेव गच्छति लयं जदेतदीश लिङ्गात्मके हर चराचरविश्वरूपिन् ॥११॥

॥ इति श्रीवेदसारशिवस्तोत्रं सम्पूर्णम् ॥

८. अथ असितकृतशिवस्तोत्रप्रारम्भः

(असितमुनिद्वारा रचित शिवस्तोत्रमा भगवान् शङ्करलाई कालरूप, महाकालरूप र कालातीतस्वरूप भनी स्तुति गरिएको छ। यो स्तुति ब्रह्मवैवर्तमहापुराणबाट उद्धृत गरी प्रस्तुत गरिएको हो।)

॥ ॐ शिवाय नमः ॥

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च। योगीन्द्राणां च योगीन्द्रं गुरुणां गुरवे नमः ॥१॥
मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखण्डन। मृत्योरीश मृत्युबीज मृत्युञ्जय नमोस्तु ते ॥२॥
कालरूप कलयतां कालकालेश कारण। कालादतीत कालस्य कालकाल नमोस्तु ते ॥३॥
गुणातीत गुणाधार गुणवीज गुणात्मक। गुणेश गुणिनां बीज गुणिनां गुरवे नमः ॥४॥
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर। ब्रह्मवीजस्वरूपेण ब्रह्मवीज नमोस्तु ते ॥५॥
इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः। दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥६॥
असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्। वर्षमेकं हविष्याशी शङ्करस्य महात्मनः ॥७॥
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम्। भवेद्धनाढ्योऽदुःखी च मूको भवति पण्डितः ॥८॥
अभार्यो लभते भार्यां सुशीलां च प्रतिव्रताम्। इह लोके सुखं भुक्त्वा यात्यन्ते शिवसन्निधिम् ॥९॥
इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे। प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥१०॥

॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे असितकृतं शिवस्तोत्रं सम्पूर्णम् ॥

९. अथ शिवाष्टोत्तरशतनामस्तोत्रप्रारम्भः

(भगवान् शिवका १०८ नामहरूको सँगालो यस स्तोत्रमा शिव, महेश्वर, शम्भु आदि १०८ नामहरूको कीर्तन गरी मानिसले आफ्ना इच्छाहरू परिपूर्ण तुल्याउने र मृत्यु उप्रान्त कैलासमा वास गर्न पाउने कुरा यहाँ संकेत गरिएको छ।)

॥ ॐ शिवाय नमः ॥

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः। वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥१॥
शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः। शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥२॥
भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः। उग्रः कपाली कामारिरंधकासुरसूदनः ॥३॥

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः। भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥४॥
कैलासवासी कवची कठोरस्त्रिपुरान्तकः। वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥५॥
सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः। सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥६॥
हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः। विश्वेश्वरो वीरभद्रो प्राणनाथः प्रजापतिः ॥७॥
हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः। भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥
कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः। मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥९॥
व्योमकेशो महासेनजनकश्चारुविक्रमः। रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥१०॥
अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः। शाश्वतः खण्डपरशुरजः पाशविमोचनः ॥११॥
मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः। पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥१२॥
भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात्। अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥१३॥
एवमष्टोत्तरशतं नाम्नामाम्नायसम्मितम्। शङ्करस्य प्रिया गौरी जप्त्वा त्रैकाल्यमन्वहम् ॥१४॥
प्रेरिता पद्मनाभेन वर्षमेकं प्रयत्नतः। अवाप सा शरीरार्द्धं प्रसादाच्छूलपाणिनः ॥१५॥
यस्त्रिसन्ध्यं पठेच्छम्भोर्नाम्नामष्टोत्तरं शतम्। शतरुद्रत्रयावृत्या चैकावृत्या पठेन्नरः ॥१६॥
॥ इति श्रीशिवाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

१०. अथ कालभैरवाष्टकप्रारम्भः

**(यस कालभैरवाष्टकस्तोत्रमा काशिपुरीका अधिनायक भगवान् कालभैरवको स्तुति गरिएको छ। धर्मसेतुका पालक, अधर्मका नाशक, कर्मबन्धनबाट मुक्ति दिलाउने भगवान् शिवका प्यारा पार्षदका रूपमा कालभैरवको स्तवन गरिएको छ।)**

॥ ॐ शिवाय नमः ॥

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम्।
नारदादियोगिवृन्दवन्दितं दिगम्बरं काशिकापुराधिनाथकालभैरवं भजे ॥१॥
भानुकोटिभास्करं भवाब्धितारकं परं नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम्।
कालकालमम्बुजाक्षमक्षशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे ॥२॥
शूलटङ्कपाशदण्डपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम्।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं काशिकापुराधिनाथकालभैरवं भजे ॥३॥
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम्।
विनिक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं काशिकापुराधिनाथकालभैरवं भजे ॥४॥
धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम्।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं काशिकापुराधिनाथकालभैरवं भजे ॥५॥
रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरञ्जनम्।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिकापुराधिनाथकालभैरवं भजे ॥६॥
अट्टहासभिन्नपद्मजाण्डकोशसन्ततिं दृष्टिपातनष्टपापजालमुग्रशासनम्।
अष्टसिद्धिदायकं कपालमालिकन्धरं काशिकापुराधिनाथकालभैरवं भजे ॥७॥
भूतसङ्घनायकं विशालकीर्तिदायकं काशिवासिलोकपुण्यपापशोधकं विभुं।
नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिकापुराधिनाथकालभैरवं भजे ॥८॥
कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम्।
शोकमोहदैन्यलोभकोपतापनाशनं ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं ध्रुवम् ॥९॥
॥ इति कालभैरवाष्टकं सम्पूर्णम् ॥

११. अथ उपमन्युकृतशिवस्तोत्रप्रारम्भः

**(भगवान् श्रीकृष्णका पनि गुरु उपमन्यु ऋषि भगवान् शङ्करका अत्यन्त प्यारा भक्त थिए। उनले शिवतत्वलाई साक्षात्कार गरी भगवान् शिवको भावपूर्ण स्तुति गरेका थिए। अत्यन्त फलदायक र अमोघ यस स्तुतिको पाठ गर्ने मानिस आफ्नो जीवनमा सफल भई परमार्थका पथिक बन्दछन् भन्ने कुरा यहाँ बताइएको छ।)**

॥ ॐ शिवाय नमः ॥

जय शङ्कर पार्वतीपते मृड शम्भो शशिखण्डमण्डन। मदनान्तक भक्तवत्सल प्रियकैलास दयासुधाम्बुधे ॥१॥
सदुपायकथास्वपण्डितो हृदये दुःखशरेण खण्डितः। शशिखण्डशिखण्डमण्डनं शरणं यामि शरण्यमीश्वरम् ॥२॥
महतः परितः प्रसर्पतस्तमसो दर्शनभेदिनो भिदे। दिननाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः ॥३॥
न वयं तव चर्मचक्षुषा पदवीमप्युपवीक्षितुं क्षमाः। कृपयाभयदेन चक्षुषा सकलेनेश विलोकयाशु नः ॥४॥
त्वदनुस्मृतिरेव पावनी स्तुतियुक्ता न हि वक्तुमीश सा। मधुरं हि पयः स्वभावतो ननु कीदृक्सितशर्करान्वितम् ॥५॥
सविषोऽप्यमृतायते भवाञ्छवमुण्डाभरणोऽपि पावनः। भव एव भवान्तकः सतां समदृष्टिर्विषमेक्षणोऽपि सन् ॥६॥
अपि शूलधरो निरामयो दृढवैराग्यरतोऽपि रागवान्। अपि भैक्षचरो महेश्वरश्चरितं चित्रमिदं हि ते प्रभो ॥७॥
वितरत्यभिवाञ्छितं दृशा परिदृष्टः किल कल्पपादपः। हृदयेऽस्मृत एव धीमते नमतेऽभीष्टफलप्रदो भवान् ॥८॥
सहसैव भुजङ्गपाशवान्विनिगृह्णाति न यावदन्तकः। अभयं कुरु तावदाशु मे गतजीवस्य पुनः किमौषधैः ॥९॥
सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम्। अमृतैरिव सम्भ्रमेण मामभिषिञ्चाशु दयावलोकनैः ॥१०॥
मुनयो बहवोऽद्य धन्यतां गमिताः स्वाभिमतार्थदर्शिनः। करुणाकर येन तेन मामवसन्नं ननु पश्य चक्षुषा ॥११॥
प्रणमाम्यथ यामि चापरं शरणं कं कृपणाभयप्रदम्। विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत् ॥१२॥
बहवो भवतानुकम्पिताः किमितीशान न मानुकम्पसे। दधता किमु मन्दराचलं परमाणुः कमठेन दुर्धरः ॥१३॥
अशुचिं यदि मानुमन्यसे किमिदं मूर्ध्नि कपालदाम ते। उत शठ्यमसाधुसङ्गिनं विषलक्ष्मासि न किं द्विजिह्वधृक् ॥१४॥
क्व दृशं विदधामि किं करोम्यनुतिष्ठामि कथं भयाकुलः। क्व नु तिष्ठसि रक्ष रक्ष मामयि शम्भो शरणागतोऽस्मि ते ॥१५॥
विलुठाम्यवनौ किमाकुलः किमुरो हन्मि शिरश्छिनद्मि वा। किमु रोदिमि रारटीमि किं कृपणं मां न यदीक्षसे प्रभो ॥१६॥
शिव सर्वग शर्व शर्मद प्रणतो देव दयां कुरुष्व मे। नम ईश्वर नाथ दिक्पते पुनरेवेश नमो नमोस्तु ते ॥१७॥
शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका। शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥१८॥
उपमन्युकृतं स्तवोत्तमं जपतः शम्भुसमीपवर्तिनः। अभिवाञ्छितभाग्यसंपदः परमायुः प्रददाति शङ्करः ॥१९॥
उपमन्युकृतं स्तवोत्तमं प्रजपेद्यस्तु शिवस्य सन्निधौ। शिवलोकमवाप्य सोऽचिरात्सहतेनैव शिवेन मोदते ॥२०॥

॥ इत्युपमन्युकृतं शिवस्तोत्रं सम्पूर्णम् ॥

॥ ॐ शिवाय नमः ॥

१२. अथ हिमालयकृतशिवस्तोत्रप्रारम्भः

(ब्रह्मवैवर्तपुराणमा हिमालयले भगवान् शिवको स्तुति गरेका छन्। उक्त स्तुति अन्तर्गतका केही पद्य यहाँ उद्धृत गरी प्रस्तुत गरिएको छ। यसमा भगवान् शिवको अपरम्पार महिमा व्यक्त गरिएको छ। सङ्कट पर्दा, शत्रु लाग्दा, महाभय पैदा हुँदा र हिंस्रक जन्तुको फेला पर्दा यस स्तोत्रको पाठ गर्नाले मानिस भयबाट मुक्त हुन्छ भनिएको छ।)

हिमाचल उवाच

त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः। त्वं शिवः शिवदोऽनन्तः सर्वसंहारकारकः ॥१॥
त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः। प्राकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥२॥
नानारूपविधाता त्वं भक्तानां ध्यानहेतवे। येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥३॥
सूर्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम्। सोमस्त्वं सस्यपाता च शीतलं शतरश्मिना ॥४॥
वायुस्त्वं वरुणस्त्वं च विद्वांश्च विदुषां गुरुः। मृत्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः ॥५॥
वेदस्त्वं वेदकर्त्ता च वेदवेदाङ्गपारगः। विदुषां जनकस्त्वं हि तपस्त्वं तत्फलप्रदः ॥७॥
अहो सरस्वतीबीज कस्त्वां स्तोतुमिहेश्वरः। इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम् ॥८॥
तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः। स्तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ॥९॥
मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे। अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ॥१०॥
भार्याहीनो लभेद्भार्यां सुशीलां सुमनोहराम्। चिरकालगतं वस्तु लभेत सहसा ध्रुवम् ॥११॥
राज्यभ्रष्टो लभेद्राज्यं शङ्करस्य प्रसादतः। कारागारे श्मशाने च शत्रुग्रस्तेऽतिसङ्कटे ॥१२॥
गम्भीरेऽतिजलाकीर्णे भग्नपोते विषादने। रणमध्ये महाभीते हिंस्रजन्तुसमन्विते।
सर्वतो मुच्यते स्तुत्वाशङ्करस्य प्रसादतः ॥१३॥
॥ इति श्रीब्रह्मवैवर्त्तमहापुराणे कृष्णजन्मखण्डे हिमालयकृतं श्रीशिवस्तोत्रं सम्पूर्णम् ॥

(११। मासे, २ पक्षे ७ तिथौ मधूसूदनशर्मणा लिखितम् इदं पुस्तकमशुद्धमिव ज्ञायते, तथापि यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ॥)

१३. दक्षिणामूर्तिमानसीपूजा

**(दक्षिणामूर्ति भगवान् शिवकै नाम हो। उहाँ सबैका गुरु हुनुहुन्छ। उहाँको मन्त्रजप र ध्यानलाई लिएर यस शीर्षकमा चर्चा गरिएको छ।)**

श्रीगणेशाय नमः

ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा।

ॐ अस्य श्रीमेधादक्षिणामूर्तिमहामन्त्रस्य सदाशिवऋषिर्जगतीच्छन्दः श्रीमेधादक्षिणामूर्तिमहामन्त्रप्रसादसिद्ध्यर्थं जपे विनियोगः। श्रीसदाशिवऋषये नमः शिरसि जगतीच्छन्दसे नमो मुखे। श्रीमेधादक्षिणामूत्तिदेवतायै नमो हृदि ॐ बीजाय नमो गुह्ये नमः शक्तये नमः पादयोर्नमः कीलकाय नमः सर्वाङ्गे।

ॐ नमो भगवते अङ्गुष्ठाभ्यां नमः हृदि दक्षिणामूर्तये तर्जनीभ्यां नमः शिरसि मध्यमाभ्यां नमः शिखायां अनामिकाभ्यां नमः कवचाय हुं प्रज्ञाकनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट् करतलकरपृष्ठाभ्यां नमः अस्त्राय फट्।

ध्यानम्

भस्मव्यापाण्डुराङ्गः शशिशकलधरो ज्ञानमुद्राक्षमाला
वीणापुस्तैर्विराजत्करकमलधरो योगपट्टाभिरामः।
व्याख्यापीठे निषण्णो मुनिवरनिकरैः सेवितः सुप्रसन्नः
सव्यालः कृत्तिवासाः सततमवतु नो दक्षिणामूर्तिरीशः ॥

मन्त्रजपो गुह्येति पुनःषडङ्गपूजनेत्यादि–
ॐ लँ पृथिव्यात्मकं गन्धं समर्प, ॐ हं आकाशात्मकं पुष्पं समर्पयामि,
ॐ यँवायात्मकं धूपं समर्पयामि, ॐ रं वन्ह्यात्मकं दीपं समर्पयामि,
ॐ वं अमृतात्मकं अमृतनैवेद्यं समर्पयामि, ॐ सं सर्वात्मकं सर्वोपचारान् समर्पयामि
॥ इति मानसी पूजा शुभम् ॥

१४. पशुपतिनाथस्तोत्रम्

**(यस शीर्षकमा भगवान् पशुपतिनाथको चरित्रअनुसारको विषयवस्तुद्वारा स्तुति गरिएको छ। उहाँलाई पशुरूप, पशुपाशविनाशी, पशुक्रीडक,पशुपति आदि नामबाट स्तुति गरी आफ्नो पशुपाश नाश गर्नका लागि प्रार्थना गरिएको छ।)**

ॐ श्रीपशुपतये नमः

देव उवाच

नमः शिवाय शर्वाय सर्वेषां पतये नमः। नमो रुद्राय रौद्राय रौद्राणां पतये नमः ॥१॥
महादेवाय देवाय देवानां पतये नमः। तेजोरूपाय रक्षाय तेजसां पतये नमः ॥२॥
व्यक्ताव्यक्तस्वरूपाय व्यक्तविभूतिने नमः। प्रपञ्चरूपिणेजाय प्रपञ्चगोचराय च ॥३॥
विश्वरूपाय विश्वाय विश्वेषां पतये नमः। पराय परमेशाय परातीताय वै नमः ॥४॥
परापाराय मानाय पार्व्वतीवल्लभाय च। हरायै हरिणेशाय हरिणाङ्गधृते नमः ॥५॥
मृगरूपाय मान्याय व्योमस्थाय नमो नमः। नमस्तुङ्गैकशृङ्गाय त्रिनेत्राय नमो नमः ॥
नमोस्तु चैकपादाय द्रंष्ट्राविभूषिताय च। पशुरूपाय भवाय पशुपाशविनाशिने ॥६॥
पशुभिः क्रीडमानाय पशूनां पतये नमः। पशुदेहं समाश्रित्य प्रमथैः पावने वने ॥७॥
स्वेच्छया सञ्चरायेश पशुरूप नमोस्तु ते। लोकनिर्वाणबीजाय यत्तद्द्रूपविधारिणे ॥८॥
वरदानैकदक्षाय क्षित्युपकारिणे नमः। त्राणाय भक्तलोकानां पशुपते नमोस्तु ते ॥१०॥
व्यक्तो भव महेशान व्यक्तो भवात्र चाम्बरात्। त्वच्छरणागतानां नो दीयतां दर्शनं विभो ॥११॥
॥ इति श्रीहिमवत्खण्डे श्रीपशुपतिस्तोत्रं समाप्तम् ॥

१५. नीलकण्ठस्तवः

**(यस शीर्षक अन्तर्गत भगवान् नीलकण्ठ अर्थात् गोसाईं प्रभुको महिमा बताउनुका साथै देवताहरूले गरेको स्तुति, मानिसहरूले गरेको स्तुतिको वर्णन गर्दै कसरी गोसाईंकुण्ड जाँदा पर्वतहरूको उल्लङ्घन गर्ने भन्नेसमेत यहाँ बताइएको छ।)**

ॐ नमः श्रीनीलकण्ठाय।

कल्पान्तोद्भ्रान्तवात्यां विततशिखिशिखाकोटिदुर्वीक्ष्यतेजः-
पुञ्जैकस्थानि कर्तुं जगदखिलमिदं मथ्यमानात्पयोधेः ॥
उत्तस्थुः कालकूटाः सुरदनुजगणान्कपयन्तः क्षिपन्तस्ते पीता लीलयैव स्मरदहन नमो नीलकण्ठाय तुभ्यम् ॥१॥
यज्ज्वालाजालमालाविकटपटुतरं व्याप्तधूम्रप्रसारैरन्धीभूतेक्षणान्तर्विगलितविलसद्बाष्पविन्दुप्रतानैः ॥
भास्वद्वक्षःस्थलान्ता दिशि दिशि परितो दुद्रुवुर्देवदैत्यास्ते पीता लीलयैव त्रिपुरहर नमो नीलकण्ठाय तुभ्यम् ॥२॥
त्वत्तः कोन्योऽस्ति वोढुं प्रलयदहनवत्कालकूटान्समुत्थान् ज्वालाजालैर्जटालांस्त्रिभुवनमपि तद् व्याप्तुमीशान्समर्थः ॥
यत्तेजःपुञ्जदग्धाः कमलभवहरीन्द्रादिदेवा मुमूर्च्छुस्ते पीता लीलयैव प्रबल हर नमो नीलकण्ठाय तुभ्यम् ॥३॥
अस्तौषीच्चतुराननः करपुटाटोपोन्नमन्मस्तको हेसंसारस्य कर्त्तः स्थितिपरगिरिशस्त्वं च संहारकर्ता।
इत्यादि त्वां विनाको वहति विषयशास्ते जगुस्तेन तस्मिस्ते पीता लीलयैव प्रवर हर नमो नीलकण्ठाय तुभ्यम् ॥४॥
कल्पान्तोद्भूतकालानलनिचयहसत्कोटितेजःसमूहैर्भस्मीकर्तुं समर्थैर्जगदपि विलसद् भूरिफूत्कारफूत्कैः।
यः श्रीनाथोऽप्कारि प्रकटितरजनीनाथवर्णोऽपि कृष्णस्ते पीता लीलयैव प्रमदहर नमो नीलकण्ठाय तुभ्यम् ॥५॥
प्रादुर्भूतेषु येषु क्षितितलगगनप्राङ्गणे दह्यमाने जग्मुर्देवं भुजङ्गा अपि दनुजगणाः कालकूटेषु भीताः।
त्वामेवानन्तरूपं स्मरदह शरणं निःशरण्याः समस्तास्ते पीता लीलयैव प्रहर हर नमो नीलकण्ठाय तुभ्यम् ॥६॥
उद्गच्छन्तः पयोधेरसितजलदभा व्यालकालानलौघाः काला ये लेलिहाना इव सकलजनानम्बरं पूर्यमाणाः
प्राधावन्कालकूटाः सकलजनहितेन त्वया हे पुरारे ते पीता लीलयैव प्रवर हर नमो नीलकण्ठाय तुभ्यम् ॥७॥
कण्ठेऽधारि त्वया भो स्मरमथन यतो दुःसहःकालकूटस्तत्तेजस्तप्तमेतद्वपुरपि भवतः शीतलस्थानमागात्। तत्पानादेव लब्धः स्मरहर परितो नीलकण्ठाय तुभ्यम् ॥८॥
तत्तेजः पुञ्जदाहैरजनि च महती घर्मपीडा शरीरे, त्रैलोक्याधारभूतस्त्वमपि च भगवान् शीतलत्वं दिधीर्षुः
सर्वत्रैवावलोक्य भ्रमभरकठिना वर्णमालाङ्गयष्टिः, सन्धीनाश्रित्य गिर्योरिह वससि नमो नीलकण्ठाय तुभ्यम् ॥९॥
यस्मिन्निःशेषपीतोत्कटविकटविषे त्वय्यशेषा अमर्त्याः
स्तोत्रं चक्रुः समन्ताद्द्रुहः हर करुणावारिराशेर्हि यस्य।
आनन्दन्ते दधाना विधिविधुमघवन्तः पुरोगा बभूवु-
र्येषां नानाप्रकारं भवत इह नमो नीलकण्ठाय तुभ्यम् ॥१०॥
॥ इति कालकूटवहनानन्तरस्तोत्रम् ॥

त्वं ब्रह्मा त्वं च विष्णुस्त्वमसि च भगवन् सर्वकर्ता च हर्ता
त्वं वायुर्भूमिरापस्त्वमसि च वरुणस्त्वं यमस्त्वं कुबेरः।
त्वं सूर्यस्त्वं च चन्द्रस्त्वमसि च मदनोन्मादसंहारकारी
नित्योऽनित्यस्त्वमेव प्रवर हर नमो नीलकण्ठाय तुभ्यम् ॥११॥
त्वं भूतस्त्वं च भावी त्वमसि च भगवन्नादिरूपोऽप्यनादिः
सूक्ष्मोऽसूक्ष्मस्त्वमेव प्रभुरसि जगतामक्षयोऽसि क्षयोऽसि।
एकोऽनेकस्त्वमेव त्वमसि च नरके त्राणहेतुर्जनानां
त्वं चिन्त्यश्चाप्यचिन्त्यः पुरमथन नमो नीलकण्ठाय तुभ्यम् ॥१२॥
येनादाहि त्रिलोकी निहितनिजशरातिथ्यभूतातिमात्रै-
र्लीलामात्रेण कामः स्मरहर भवता सोऽपि दग्धः क्षणेन।
यः कालाग्निप्रतापस्त्रिपुरसुररिपुः सर्वलोकस्य यन्ता
सोऽपि प्रायस्तृणं किं विषमनघ नमो नीलकण्ठाय तुभ्यम् ॥१३॥
त्वल्लब्धाद्धि प्रसादाद्धर वयमधुना स्वर्गलब्धोपभोग्याः
मर्त्या भुञ्जन्तु मर्त्यं पुनरपि भुजगा यान्तु पाताललोकम्।
नो चेन्नेमे न चैते न च वयमथवा नास्ति लोकत्रयं च
स्वामिंस्तस्मान्नमोऽस्तु त्रिभुवनपतये नीलकण्ठाय तुभ्यम् ॥१४॥

॥ इति सन्तुष्टदेवगणस्तोत्रम् ॥

स्तोत्रैरेभिस्तुतस्त्वं सकलदिविषदैर्दग्धमुग्धाङ्गयष्टिः
श्रीकण्ठस्त्वं विषौघैरनवरतमहामोहमूर्च्छ्यमानः।
स्वं स्वं स्थानं च गच्छत्स्वपि सुरभुजगादिष्वशेषेषु नाथ
त्वं तत्रोदङ्मुखो योऽभवदनघ नमो नीलकण्ठाय तुभ्यम् ॥१५॥
उच्चैरुच्चैर्महीध्रान् गगनतलमिदं लेलिहानान्विलङ्घ्य
त्वं वा कूटे हिमानीपिहितपरिसरैर्ब्रध्नबिम्बं निरुध्य
ब्रह्माण्डं गन्तुकामैरिव शिव परितः पर्वतैरुत्तमानाम्
भूमीमध्यास्य कुण्डं हर वससि नमो नीलकण्ठाय तुभ्यम् ॥१६॥
ये वा मर्त्यैरगम्या हिमनिचयभृतः कालरूपैः किरातै-
र्यैपि व्याप्ताः समन्तात्प्रतिपदपपि ये मानसं कम्पयन्ति।
येभ्यो लध्वा निपातान्कलुषितचरिता जन्तवश्चूर्णमानाः
स्वामिस्तांस्त्वं विलंघ्यावससि हर नमो नीलकण्ठाय तुभ्यम् ॥१७॥
आरोढुं ये हि शक्तास्तव भव विशदाद् देव भक्तिप्रभावा-
त्किं चान्ते पारयाने स्मरमथन नमो वर्ततेऽन्यः प्रकारः।
तस्मादेतां विलङ्घ्यायतगुण भवतः पादपद्मे नमन्ति
प्रायस्ते पुण्यवन्तो दुरितहर नमो नीलकण्ठाय तुभ्यम् ॥१८॥
तत्रैवात्यन्तकालानलविषमविषाघूर्णमानेन शैले
त्यक्तस्ते चन्द्रमौले लकुट इति ततः पर्वतोऽयं जगाम
ख्यातिं वै लागुडीति प्रमथगणपते तारयैनन्ततस्तं
त्वत्पादं द्रष्टुकामोऽहमिति हर नमो नीलकण्ठाय तुभ्यम् ॥१९॥
यत्रैवात्यन्तकालानलविषमविषाघूर्णमानेन शैले
जातस्ते चित्तभङ्गः स्मरमथन ततः पर्वतो यो जगाम
ख्यातिं वै चित्तभङ्गेति च भव नितरान्तारयैनन्त्वविघ्नं
त्वत्पादं द्रष्टुकामोऽहमिति हर नमो नीलकण्ठाय तुभ्यम् ॥२०॥
यत्रैवात्यन्तकालानलविषमविषाघूर्णमानेन शैले
त्यक्तं ते च त्रिशूलं तत इह भुवने पर्वतो यो जगाम
ख्यातिं लाके त्रिशूलेति च परमविभो तारयैन त्वविघ्नं
त्वत्पादौ द्रष्टुकामोऽहमिति हर नमो नीलकण्ठाय तुभ्यम् ॥२१॥
॥ इति पर्वतोल्लङ्घनवर्णना ॥
यत्रागाधे शयानस्त्वमसि च भगवन्दूरदाहं शरीरे
कुण्डे मुक्तानिकायोज्ज्वलशिशिरवलद्वारिपूरप्रवाहे।
नीहारासारयादः पतिरयमधुना भीतिभावं दधानः
पापिष्ठानां समन्तात् स च जपति नमो नीलकण्ठाय तुभ्यम् ॥
यत्प्रत्यन्तर्निलीनैरमलमणिगणैः शङ्खमुक्तानिकायै-
र्वैदूर्यादिप्रतानैरपि चितसुतलं भाति भूमौ तलेषु
तत्रैव त्वं शयानः स्मरहर सततं राजसे नन्द्रमौले
सिन्धौ शायीव कृष्णस्त्वनघ हर नमो नीलकण्ठाय तुभ्यम् ॥
यद्गाम्भीर्यं विलोक्याम्बुधिरपि सततं भूरि लज्जां दधान-
श्चिन्ताधिक्यैः कृशाङ्गोऽस्त्यत इह जगतीं नो विमग्नां करोति
नाप्यायं वर्धते चेति च परिरटयत् किं तदग्रेऽस्मि किञ्चित्
सिन्धौ शायीव कृष्णो ह्रदसि हर नमो नीलकण्ठाय तुभ्यम् ॥
स्वर्णालङ्कारमालारुचिरविरचितिर्भ्राजमानान्तरालं
यद्वर्षद्धेमधाराद्युतिविततततिर्व्याप्तदुःसोढवारि

पापिष्ठा यज्जलन्तु क्षणमपि वसते किं लभन्ते तदैव
स्पृष्ट्वा प्राणांस्त्यजन्ति ह्रदसि हर नमो नीलकण्ठाय तुभ्यम् ॥
यत्र त्वत्क्षिप्तशूलाहतगिरिशिखरोद्भूतगीर्वाणधुन्या
धारापातत्रयेण स्मरहर सततं दग्धमुग्धाङ्गसेकैः
सम्यक्तं पद्यते हे भव विशद् ततो लब्धनिद्राय तत्र
प्रायो हादक्षयाय ह्रदसि हर नमो नीलकण्ठाय तुभ्यम् ॥
इत्थं तत्र स्मरारे कृतशुभवसतिर्व्याप्य देहैरुदारै
र्दिग्वासा यो जटावान् विषविरहमना यद्भवान्मोक्षदाता।
तत्वत्पादाम्बुजेहरपुरमथन विभो द्रष्टुकामो भवामि
प्रीतस्तस्मात्प्रसादं विसृज हर नमो नीलकण्ठाय तुभ्यम् ॥२८॥
नो चेत्पापात्मकोऽहं कथमिह भगवत्पादपद्मे विशामि
तत्रापि त्वं समानप्रभुरसि करुणातुल्यदृष्टिर्जनौघे
भक्ते चोक्तेपि पापे सुकृतिनि सकले देवदेवेश तस्मा-
न्मह्यं प्रायः प्रसादं विसृज हर नमो नीलकण्ठाय तुभ्यम् ॥
यो वै कान्तारदुर्गान् गगनगतिरुधः पर्वतौघान् विलङ्घ्य
व्याप्तान्दुष्टैः किरातैरपि समविषमान् रक्तपापूर्णमार्गान्
त्वत्पादाम्भोजयुग्मं स्मरहर नितरां तत्र गत्वा नमन्ति
श्रीकण्ठास्ते कृपा ते पुरमथन नमो नीलकण्ठाय तुभ्यम् ॥
तत्त्वं हेवामदेव प्रकटय करुणां देहि पादारविन्द-
द्वन्द्वं द्रष्टुं स्मरारे भगवति भवति व्यक्ततामेति नित्यम्।
पुण्यं पापं च तत्राप्यविहितपरमैश्वर्यमोक्षप्रदाता-
सीतिप्रायः प्रसादं हर विसृज नमो नीलकण्ठाय तुभ्यम् ॥
नान्यत्किञ्चिद्वदामो न च वयमधुना पूजयामो भजाम-
स्तत्वं श्रीकण्ठदेव प्रथितगुणमहोदार सर्वज्ञ तस्मात्।
किं वा त्रैलोक्यवाञ्छावितरणचतुरः सर्वदोऽसीति सर्व-
प्रायस्तस्मात्प्रसादं विसृज हर नमो नीलकण्ठाय तुभ्यम् ॥
त्वत्तो नास्ति द्वितीयस्त्वमसि च भगवन्नादिमध्यान्तसूक्ष्मं
त्वं मायामुक्तदेहः करगतबदराकारतुल्यं गिरीशः।
विश्वं पश्यस्यशेषं तव गुणमहिमा वश्यते कैरशेषा-
त्तस्मात्प्रायः प्रसादं मयि विसृज नमो नीलकण्ठाय तुभ्यम् ॥
लब्धुं त्वत्सन्निधानं कलयितुमपि तत्पुण्यपादाब्जयुग्मं
त्यक्तुं संसारदुःखं पुनरपि सकलां सम्पदं भोक्तुकामः।
अत्यन्तं भक्तिभावं जनयितुमपि च प्रायशो नीलकण्ठे
नान्यस्मिन्वापि कस्मिन्नविहतकरुणे पठ्यतां स्तोत्रमेतत् ॥३४॥
दत्वा कोटिर्गवां यः सुकृतमिह लभेत्काञ्चनानां सहस्रम्
भूमिं वा सागरान्तामपि सकलमहीतीर्थयात्रां प्रकृत्य
यज्ञं वाप्यश्वमेधादिकमपि सततं चान्नदानैर्विशेषात्
तत्पुण्यं नीलकण्ठस्तवपरिपठने लभ्यते नास्ति मिथ्या ॥३५॥
चौराद् व्याघ्रात् तथाग्नेर्नृपपरकुजनतो दुःसहव्याधितो वा
डाकिन्या वा पिशाचादपि कथममलं भीतिरस्तीह लोके।
देव श्रीनीलकण्ठस्तवमनुपठतां किञ्च रात्रौ दिवा वा
प्रातर्वा शृण्वते वा पुनरपि मरणे रुद्रदेहं लभन्ते ॥३६॥
सर्वमागममालोक्य लब्धमेतत्सुनिश्चितम्।
नीलकण्ठात्परो देवो न भूतो न भविष्यति ॥३७॥

१६. श्रीपशुपत्यष्टकम्

**(यसमा भगवान् पशुपतिको स्तुति गरी उहाँका दिव्य गुणहरूलाई प्रकाशित गरिएको छ।)**

शङ्करत्रिदशनाथ दयालोभाललोचन हरत्रिपुरारे। अच्युताव्यय कलाधरमौले मानसं पशुपते हर दुःखम् ॥१॥
कालकाल करुणामय शूलिन् कान्तकाय कलिनाशनमूर्ते। कालकूटकलितासितकण्ठ मानसं पशुपते हर दुःखम् ॥२॥
केशवप्रिय पिशङ्गकपर्दिन् पार्वतीश्वर पिनाकधरेश। मन्मथप्रमथकाशविकासिन् मानसं पशुपते हर दुःखम् ॥३॥
कुन्दहीरकसुधाकरगौरनिष्कलङ्कनिखिलागमवेद्य। त्र्यक्षनिर्गुणगुणेश्वरजिष्णो मानसं पशुपते हर दुःखम् ॥४॥
पुण्यकीर्तनपुराणपुरारे पूर्णरूप पुरुषोत्तम पुण्य। पञ्चवक्त्र पुरुषप्रमथेन्द्र मानसं पशुपते हर दुःखम् ॥५॥
भोगिभूषणविभूषितभोगभूतिशोभिततनो हरिकेश। भक्तहृत्कमलवेश्मनिवासिन् मानसं पशुपते हर दुःखम् ॥६॥
शुद्धभावनतकन्धरलोकवृन्दवाञ्छितफलप्रदशम्भो। सृष्टिपालनलयैकनिदान मानसं पशुपते हर दुःखम् ॥७॥
दुष्टनिर्दलननिर्जरदेवस्वर्णदीभुवनशेखर शर्व। वामदेवमतिगम्य महात्मन् मानसं पशुपते हर दुःखम् ॥८॥
शङ्कराष्टकमिदं सुमनोज्ञं रोगशोककलहार्तिविनाशम्। यः पठेत् सकलवाञ्छितसिद्धिस्तस्य तुष्ट इह शङ्करदेवः ॥९॥

॥ इति श्रीपशुपत्यष्टकम् ॥

१७. गुरुपादुकास्तोत्रम्

**(यस शीर्षकमा भगवान् शङ्करलाई नै संसारका गुरु मानी वहाँका समग्र विशेषता बताउँदै वहाँका चरणकमलमा आत्मनिवेदन गरिएको छ। )**

॥ नमः श्रीगुरुनाथाय शम्भवे ॥

ॐ ब्रह्मरन्ध्रसरसीरुहोदरे, नित्यलग्नमवदातमद्भुतम्। कुण्डलीकनककाण्डमण्डितं, द्वादशार्णसरसीरुहं भजे ॥१॥
तस्य कन्दलितकर्णिकापुटे, क्लृप्तरेखमकथादिरेखया। कोणलक्षितहलक्षमण्डलीभावलक्ष्यमबलालयं भजे ॥२॥
तत्पुटे पटुतडित्कडारिमस्पर्धमानमणिपाटलप्रभम्। चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमण्डलम् ॥३॥
ऊर्ध्वमस्य हुतभुक्शिखासखं, चिद्विलासपरिबृंहणास्पदम्। विश्वघस्मरमहश्छटोत्कटं, व्यामृशामि युगमादिहंसयोः ॥४॥
तत्र नाथचरणारविन्दयोः, कुंकुमासवझरीमरन्दयोः। द्वन्द्वमिन्दुमकरन्दशीतलं, मानसं स्मरति मङ्गलास्पदम् ॥५॥
पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम्। षडाम्नायफलप्राप्तं प्रपञ्चे चातिदुर्लभम् ॥६॥
निषक्तमणिपादुकं नियमिताघकोलाहलं स्फुरत्किसलयारुणं नखसमुन्मिषच्चन्द्रिकम्।
परामृतसरोवरोदितसरोजरोचिष्णुकं भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥७॥
नित्यानन्दे निरूपमपदे निर्मले निर्विकल्पे
व्योमातीते परमचरणे तेजसां मूलभूते।
सम्यक्चित्तप्रविलयवशात्स्वानुभूत्यैकगम्यं
दिव्यं तेजः स्फुरति सहसा यस्य योगी स एव ॥८॥
छित्वा कर्मनिबन्धनं निरवधि प्लुष्ट्वा विकल्पात्मकं
कारागारमनेकसंशयरिपून् हत्वा कृपासेचनैः।
प्रक्षाल्य प्रचुरं मलत्रयमिदं संस्थापितः स्वे पदे
येनाहं गुरुरूपिणे भगवते तस्मै नमः शम्भवे ॥९॥
॥ इति श्रीसिद्धयामले पञ्चवक्त्रविनिर्गतं गुरुपादुकास्तोत्रं सम्पूर्णम् ॥

१८. श्रीगुर्वष्टकम्

**(यस शीर्षक अन्तर्गत भगवान् शङ्करलाई संसारका गुरु मानी वहाँको स्तुति गरिएको छ।)**

॥ नमो गुरुचरणकमलेभ्यः ॥
ब्रह्मस्थानसरोजमध्यविलसत्स्फीतांशुपीठस्थितं
स्फूर्जत्सूर्यरुचिं वराभयकरं कर्पूरकुन्दोज्ज्वलम्।
श्वेतस्रग्वसनानुलेपनयुतं विद्युद्रुचा कान्तया
संश्लिष्टार्धतनुं प्रसन्नवदनं वन्दे गुरुं सादरम् ॥१॥
मोहध्वान्तमहान्धविग्रहवतां चक्षूंषि चोन्मीलयन्

यश्चक्रे रुचिराणि तानि दयया ज्ञानाञ्जनाभ्यञ्जनैः।
व्याप्तं यन्महसा जगत्त्रयमिदं तत्त्वप्रमोदोदयं
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥२॥
मातङ्गी भुवनेश्वरी च बगला धूमावती भैरवी
ताराच्छिन्नशिरोधरा भगवती श्यामा रमा सुन्दरी।
दातुं नो प्रभवन्ति वाञ्छितफलं यस्य प्रसादं विना
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥३॥
काशीद्वारवतीप्रयागमथुराऽयोध्यागयाऽवन्तिका
मायापुष्करकाञ्चिकोशलपुरीश्रीशैलविन्ध्यादयः।
नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥४॥
रेवा सिन्धुसरस्वती त्रिपथगा सूर्यात्मजा कौशिकी
गङ्गासागरसङ्गमाद्रितनया लोहित्यशोणादयः।
नालं प्रोक्तफलप्रदानविषये यस्य प्रसादं विना
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥५॥
लोकेशो हरिरम्बिका स्मरहरो माता पिताऽभ्यागता
आचार्यः कुलपूजिता यतिवरो वृद्धस्तथा भिक्षुकः।
नैते यस्य तुलां प्रयान्ति कलया कारुण्यवारांनिधेः
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥६॥
सत्कीर्तिर्विमला यशः सुकविता पाण्डित्यमारोग्यता
वाग्देव्यां पटुता कुले चतुरता गाम्भीर्यमक्षोभिता।
प्रागल्भे प्रभुता गुणे निपुणता यस्य प्रसादाद्भवेत्
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥७॥
ध्यानं दैवतपूजनं गुरु तपो दानाग्निहोत्रादयः
पाठो होमनिषेवणं पितृमखोऽथाप्यागतार्चा वलिः।
ये ते व्यर्थफला भवन्ति नियतं यस्य प्रसादं विना
तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥८॥
पूर्वाशाभिमुखः कृताञ्जलिपुटः श्लोकाष्टकं यः पठेत्
पौरश्चर्यविधिं विनापि लभते मन्त्रस्य सिद्धिं पराम्।
नो विघ्नैः परिभूयते प्रतिदिनं प्राप्नोति पूजाफलं
देहान्ते परमं पदं निवसते यद्योगिनां दुर्लभम् ॥९॥
॥ इति श्रीशिवगुर्वष्टकं सम्पूर्णम् ॥
श्रुतिः स्थाने स्थाने स्मृतिसहचरी सा विवदते
न मीमांसा मांसं परिहरति तर्को निरवधिः।
न वेदान्तोऽभ्रान्तो भ्रमयति हि सांख्यं प्रकृतिभि-
र्दुरारोहो योगो गमयति गुरुर्ब्रह्मपदवीम् ॥१॥
॥ स्वस्ति वः ॥

१. मुक्तिपञ्चकम्

(धवलागिरि अञ्चल अन्तर्गत मुस्ताङ जनपदमा पर्ने मुक्तिनाथ धाम विश्वका हिन्दुभक्तहरूका लागि अत्यन्त आकर्षणको विषय बनेर रहेको छ। कृष्णागण्डकी नदीको शिरमा भगवान् मुक्तिनाथ विराजमान हुनुहुन्छ। अघि ब्रह्माजीले

संसारका जीवहरूको मुक्तिका लागि यसै तीर्थमा भगवान् शिव र विष्णुको माध्यमबाट यज्ञ सम्पन्न गर्नुभएको थियो। मुक्तिका लागि यज्ञ गरिएको यो क्षेत्र मुक्तिधामको नामबाट विश्वमा प्रसिद्ध छ। यहाँ उनै मुक्तिनाथ भगवान्को स्तुति गरिएको छ।)

॥ ॐ नमो मुक्तिनाथाय ॥

शैलराजशिखरेऽसितासरित्सन्निधौ धवलभासि भास्वरम्। भुक्तिमुक्तिपरिशीलिनां भजे मुक्तिनाथमिह मुक्तिदायकम्॥१॥
प्रज्वलज्ज्वलनकीलसम्मिलत्सज्जलाच्छतमधारयोज्ज्वलम्। उज्ज्वलीकृतसमस्तभूधरं मुक्तिनाथमजमुक्तिदायकम्॥२॥
कृष्णगण्डकसरिच्छिरोगिरौ कृष्णगण्डकशिलाकुलाकुले। देवदानवकुलार्च्यमर्चये मुक्तिनाथमिह मुक्तिदायकम् ॥३॥
शोकतापहतलोकमाश्रितं संसृतेः सकलबन्धनात्क्षणात्। मोचयन्तमहमाश्रयामि तं मुक्तिनाथमिह मुक्तिदायकम् ॥४॥
पञ्चभूतपरिपञ्चपञ्जरे पञ्चधा पतितदेहिदेशिकम्। पञ्चदेवपरिषत्प्रभुं भजे मुक्तिनाथमिह मुक्तिदायकम् ॥५॥
मुक्तिपञ्चकमिदं विमुक्तये मुक्तिनाथपदभक्तिशालिनाम्। पञ्चपातकविमुक्तिसाधनं पञ्चकोषकृतदोषमोषकम् ॥६॥
स्तवनं मुक्तिनाथस्य मुक्तिनाथेन योगिना। निर्मितं मुक्तिकामश्चेत्सेव्यं पञ्चजनैः सदा ॥७॥

॥ शिवम् ॥

॥ इति शिवप्रकरणम् ॥

## अथ गोरक्षप्रकरणम्

श्रीगुरवे नमः।

### १. मत्स्येन्द्रनाथावतारकथा

(स्कन्दमहापुराणको नागरखण्डबाट उद्धृत गरी यस शीर्षकमा प्रस्तुत गरिएका पद्यहरूबाट गोरखनाथका गुरु मत्स्येन्द्रनाथको उत्पत्तिका विषयमा संक्षिप्त जानकारी प्राप्त हुन्छ। माछाको पेटबाट प्रकट भएका हुनाले यी महायोगीलाई मत्स्येन्द्रनाथ भनिएको हो। यिनै मत्स्येन्द्रनाथले योगको विशिष्ट व्याख्या प्रस्तुत गरेका थिए।)

ब्रह्मोवाच

एतस्मिन्नन्तरे तत्र क्षीरसागरमध्यतः। उज्जहार विमानाग्रे तेजोभाराभिपीडितः ॥१॥
उरसा हुङ्कृतिं कुर्वन् सान्निध्यं समुपागतः। महामत्स्यो ज्ञानपूर्वं सन्निधानेऽद्भुताकृतिः ॥२॥
हुङ्कारगर्भं पृच्छन्तं दृष्ट्वा तं स महेश्वरः। तेजसा स्तम्भयामास वाक्यमेतदुवाच ह ॥३॥
कस्त्वं मत्स्योदरस्थो वै देवो यक्षोऽथ मानुषः। कथं जीवसि देहान्तर्गतो मम वद प्रभो ॥४॥

मत्स्योदर उवाच

अहं मत्स्योदरे क्षिप्तः समुद्रे क्षीरसम्भवे। मात्रा तु पितृवाक्येन नायं मम कुलोचितः ॥५॥
कुनक्षत्रभयात्तेन ज्ञातं स्वकुलनाशनम्। गण्डान्तयोगजनितो बालो न गृहकर्मकृत् ॥६॥
इति मात्रा दुःखितया निरस्तो भृगुवंशजः। झषेनापि गृहीतोऽस्मि कालो मेऽत्र महानभूत् ॥७॥
तव वाक्यामृतैरेभिर्ज्ञानयोगो महानभूत्। तेन त्वं सकलो ज्ञातो महामूर्तोऽप्यमूर्तकः ॥८॥
अनुज्ञां मम देवेश देहि निष्क्रमणस्य च। यथाहं पितृपादाब्जं भवान्या अपि लक्षये ॥९॥

हर उवाच

विप्रोऽसि सुतरूपोऽसि पूज्योऽस्यतिथिभावतः। बहिर्निष्क्राम वेगेन स्तम्भितोऽसौ महाझषः ॥१०॥
ततोऽसौ शिरसा जातान् केशान् मध्यतले न्यधात्। ततोऽस्य प्रसृतं वक्त्रं क्षणाद्बहिरूपागमत् ॥११॥
रूपवत्प्रतिमायुक्तो मत्स्यगन्धिर्निरामयः। सोमकान्तिः क्षमाशीलो योगमूर्तिर्गिरिप्रभः ॥१२॥
तं दृष्ट्वा प्रणतं देवो हरः प्रोत्फुल्लमानसः। पस्पर्श पाणिना पुत्र भव त्वं दिव्यगन्धभाक् ॥१३॥
उमापि प्रणतिं प्राप्तं सुतं स्वोत्सङ्गभाजनम्। चकार नामापि हरश्चक्रे तस्य प्रहर्षितः ॥१४॥
यस्मान्मत्स्योदराज्जातो योगिनां प्रवरो ह्ययम्। तस्मान्मत्स्येन्द्रनाथोऽयं लोके ख्यातिं प्रयास्यति ॥१५॥
योगोपदेष्टा नाथानां सर्वेषाञ्च भविष्यति। अच्छेद्यश्चामरतनुर्ज्ञानयोगस्य पारगः ॥१६॥
निर्ममश्चापि निर्द्वन्द्वो निराशो ब्रह्मसेवकः। जीवन्मुक्तश्च विचरन् भुवनानि चतुर्दश ॥१७॥
इत्युक्तश्च महेशेन प्रणम्य स पुनः पुनः। कृत्वा प्रदक्षिणां देवीं स्कन्दमालिङ्ग्य चागमत् ॥१८॥
ततः सा पार्वती हृष्टा प्राप्य ज्ञानमनुत्तमम्। महेश्वरेण सहिता मन्दराचलमाययौ ॥१९॥
एवं सा परमां सिद्धिं प्रणवस्य प्रभावजाम्। सम्प्राप्ता जगतां माता द्वादशाक्षरजां मुने ॥२०॥

इमां मत्स्येन्द्रनाथस्य समुत्पत्तिं शृणोति यः। चातुर्मास्ये विशेषेण सोऽश्वमेधफलं लभेत् ॥२१॥
इति श्रीस्कन्दमहापुराणे षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये ब्रह्मनारदसंवादे
चातुर्मास्यमाहात्म्ये मत्स्येन्द्रनाथोत्पत्तिकथनं नाम त्रिषष्ट्युत्तरद्विशततमोऽध्यायः ॥२६३॥

॥ ॐ स्वस्ति ॥

२. गोरक्षनाथावतारकथा

(स्कन्दपुराणको भक्तविलास खण्डबाट उद्धृत गरिएको यस शीर्षकबाट गोरक्षनाथ योगाधीश्वरको परिचय प्राप्त हुन्छ। गोरक्षनाथको नेपालसँग र नेपालका एकीकरणकर्ता राष्ट्रनायक पृथ्वीनारायण शाहसँग पनि सम्बन्ध रहेको छ। गोरक्षनाथलाई भगवान् शिवकै अवतार मानिन्छ। तलका पद्यहरूमा उहाँकै विशेषता बताइएको छ।)

ॐ अथैकदैकान्त उपस्थितं प्रभुं जगद्गुरुं तामरसासने स्थितम्।
उवाच वाचं सुधयापि वन्दिता मृषिः सुराणामपि योगवल्लभः ॥१॥
गुरो पुरैतद्भवतो मुखाम्बुजाच्छ्रुतं मयेशेन विवृण्वते वरः।
मत्स्येन्द्रनाथाय प्रसन्नचेतसा दत्तोऽस्ति नाथान्वययोगकृद् भव ॥२॥
एवं स सम्प्राप्तवरो महेशतः कथं प्रवृत्तोऽभवदीशशासने।
उवाच कस्मै निजरूपलब्धये शिष्याय योगस्य विपश्चितेऽयनम् ॥३॥
स सम्प्रदायञ्च कथं हि योगिनां नाथाभिधानामकरोद्धरप्रियः।
मह्यं समुत्कण्ठितचेतसे पितर्ब्रूह्यस्ति किं गोप्यमुदारचेतसाम् ॥४॥
आकर्ण्य देवर्षिवचोऽम्बुजासनस्तत्प्रेमसम्भिन्नगिरा वशीकृतः।
उवाच संस्मारितशर्वशासनो देवर्षिमाद्यर्षिपिता पितामहः ॥५॥
आदाय वाक्यं मकरध्वजद्विषः स्वानन्दपीयूषपयोधिसन्निभम्।
जगाम तत्रैव पयोनिधेस्तटे मत्स्येन्द्रनाथो विदधद्विभोर्वचः ॥६॥
यमानकामान्नियमांश्च सञ्चरन् बद्धासनः संहृतप्राणसंहतिः।
प्रत्याहृतात्मा धृतिमान्निदिध्यसन्नेकाग्रचित्तोऽभवदात्मनीश्वरे ॥७॥
कालो महान् योगयुजो महामुनेर्मत्स्येन्द्रनाथस्य चिदात्मवारिधौ।
मग्नस्य यातो बुबुधे समाधितो न योगियोगान्वयसम्प्रवर्तकः ॥८॥
तदा भवो योगपथप्रवृत्तये योगेश्वरोपासितपादपङ्कजः।
अनाथनाथो भुवि नाथपद्धतिं विधित्सुरैच्छच्छफरेन्द्रमात्मना ॥९॥
रजतगिरिनिवासी प्रेरयामास सिद्धं निजनिकटनिवासं मूलनाथं ह्रुदेव।
शफरदिविषदीशं बोधयात्मस्थचित्तं मदुदितवचनं द्राक् तात गत्वा विधेहि ॥१०॥
इत्थं भवप्रेरितमानसोऽचिराद् गोपालबालस्य विवेश विग्रहम्।
मत्स्येन्द्रनाथं मनसा समाधितः प्रबोध्य पप्रच्छ च योगपद्धतिम् ॥११॥
प्रभो यदीशस्य मुखेन्दुमण्डलात् सुधात्रपाकारि पुरा श्रुतं त्वया।
योगामृतं तन्मृतिजन्मभीरवे मह्यं कृपावारिनिधेऽभिधेहि भोः ॥१२॥
इत्थं स पृष्टः करुणागृहीतधीरूपादिदेशात्मसमाधिपद्धतिम्।
गोरक्षनाथेत्यभिधां शिशोर्व्यधाद् योगस्य पन्थानमथाविशत्स्वयम् ॥१३॥
सम्प्राप्य योगस्य विधिं विधित्सता गोरक्षनाथेन वृषध्वजेप्सितम्।
सहस्रशस्तृप्तहृदो नृपार्भकाः समुद्धृता योगपथेन योगिना ॥१४॥
इति नृपतिसुतान् बहून् समाधेः सुखमनुभाव्य निधाय नाथवंशम्।
.................................................................. ॥१५॥
सुरभिपशिशुवेषधृक् स शम्भोः पुनस्तं गिरिशिखरनिवासं प्राप्य योगं समस्थात् ॥१६॥
रजतगिरिनिवासी भूतले मूलनाथः सुरभिपशिशुदेहे तात धातर्व्यवासीत्।
कथमिति वद मह्यं पृष्ट इत्याह वेधा घटजनिरपि विप्रान् काञ्चिकाया यथाह ॥१७॥
तव तनुज त्यजेदं वाक्यतो मेऽद्य तूर्णं भवतु विदितमात्मन्यान्मना सर्वथा भोः।

पितृवचनसुधां तां कर्णपात्रैश्च पीत्वा त्वतिमुदितमनस्कः प्रास देवर्षिवर्यः ॥१८॥
इति श्रीस्कन्दपुराणे भक्तविलासखण्डे एकपञ्चाशत्तमोऽध्यायः ॥५१॥

अगस्तिरुवाच

श्रूयते हि महाशैलः स्मरणादघनाशनः । सिद्धचारणगन्धर्वमुनिकोटिनिषेवितः ॥१॥
यत्र सर्वेश्वरः श्रीमान् शम्भुराकाशमध्यगः । स्कन्दविघ्नेशसहितः सह देव्या सदाम्बया ॥२॥
निवसत्यब्जसम्भूतहरिमुख्यसुरैः स्तुतः । तस्य पक्कणकोटिषु यत्र साप्यलका पुरी ॥३॥
षष्ट्यष्टकोटिगणपनीरन्ध्रशिखरश्च यः । यत्र सौगन्धिकं नाम सरः सौरभिहल्लकम् ॥४॥
यत्र मन्दाकिनी रम्या प्रवहन्ती सुदृश्यते । यः शङ्करजटाचन्द्रकलिकाचन्द्रिकोज्ज्वलः ॥५॥
अमावास्यां न जानाति निश्शेषितसुधाकराम् । यदीयशिखरं दृष्ट्वा पुनर्गर्भे न मज्जति ॥६॥
यन्न पश्यन्ति पापिष्ठाः कामक्रोधान्धचेतसः । तत्र सिद्धेषु कैलासे मूलनाथ इति श्रुतः ॥७॥
परकायप्रवेशादौ शक्तिमान् भक्तिमान् हरे । आसीत्कश्चिदसौ जातु स्थानेषु धरणीतले ॥८॥
सर्वत्र सेवितुं शम्भुं प्रतस्थे व्योममार्गतः । न कैलासात्परं किञ्चित्पुरमस्ति न गम्यताम् ॥९॥
सिद्धैरिति निरुद्धोऽपि ततः प्रस्थित एव सः । केदारे चाविमुक्ते च गोकर्णे मल्लिकार्जुने ॥१०॥
कालहस्तिस्थले दिव्ये विस्तृते चारुणाचले । श्रीमदवृद्धाचले काञ्च्यां पुण्डरीकपुरे हरम् ॥११॥
सविमानः क्रमेणाप कावेरीतीरमुत्तमम् । वेदारण्यपुरे लक्ष्म्याः कावेरीसिन्धुसङ्गमे ॥१२॥
छायावने श्वेतवने मायूरे चाघनाशने । निषेव्य देवमीशानं गवावतरमभ्यगात् ॥१३॥
समाजविहिताक्रन्दमभ्याशे तस्य दृष्टवान् । बाष्पायमाननयनं मूलनाथो गवां कुलम् ॥१४॥
दृष्ट्वा तत्सन्निधिं गत्वा किमेतदिति शङ्कितः । परितः प्रेक्षमाणस्तु गोपालं मृतमैक्षत ॥१५॥
कण्डूविनोदैश्च तृणैश्छायाभिः सलिलैर्गवाम् । स कुलं पोषयामास गावस्तच्छोककर्शिताः ॥१६॥
यथा नष्टेषु वत्सेषु तृणेष्वपि गतस्पृहाः । विलोक्य दयया कार्यं कथं स्यादित्यचिन्तयत् ॥१७॥
स योगशक्तिमान् कुञ्जे दे .................. । ....................................... णा ॥२९॥
वपुर्निकुञ्जे विन्यस्तमाज्ञयास्य तिरोहितम् । इति गोरक्षतां प्राप्तः सर्वैर्लोकैश्च वन्दितः ॥३०॥
यथा नियुक्तोऽस्मिन् तथा करोमीति पिनाकिना । विचचार महायोगी पूज्यमानो मुनीश्वरैः ॥३१॥
अध्यात्मविद्यां व्याकुर्वन्ननयत्समयं बहुम् । गवावतारमासाद्य देवस्याग्रे समुन्नतम् ॥३२॥
आश्रितः पिप्पलतरुमन्वहं ध्यानमास्थितः । दक्षश्च यः क्रियायोगे विन्यस्तात्मा महेश्वरे ॥३३॥
क्रमेणोन्मुक्ततन्मूर्त्तिः शैवे ज्योतिष्यलीयत ॥३४॥

इति श्रीस्कन्दपुराणे भक्तविलासखण्डे द्विपञ्चाशत्तमोऽध्यायः ॥५२॥ हर ॥ हर ॥ हर ॥
॥ नमो गोरक्षपादुकाभ्याम् ॥

### ३. शिवगोरक्षस्तवः

(यस शिवगोरक्षस्तवको रचना गोरक्षाचलाधीश श्री ५ पुरन्दर शाहका आश्रित कवि शिवराम शर्माले गरेका हुन् । यसमा भगवान् गोरक्षनाथको शिवको रूपमा स्तवन गरिएको छ । गोरखनाथलाई यस कवितामा गङ्गाधर, पञ्चमुख आदि नामहरूले स्तुति गरी वहाँ साक्षात् भगवान् पशुपतिकै रूप भएको तथ्य प्रकट गरिएको छ ।)

कीनाशपाशभीतोऽयं नन्दी तेपे तपस्तव । बालोऽपि लोकितो देव त्वया जातो गणाग्रणीः ॥१॥
वरिवस्याफलं लब्धं त्वच्चक्रं चक्रपाणिना । हताशः को गतो यस्ते चरणौ शरणागतः ॥२॥
सिन्धुजश्चक्रिणं चक्रे कारायां क्षारवारिधौ । त्रिलोक्यामेकवीरोऽसौ तव क्रीडासु कन्दुकः ॥३॥
भ्रूलतामुन्नतां यस्य न सेहे जगतां त्रयी । पादाङ्गुष्ठभरं सोऽयं न सेहे ते दशाननः ॥४॥
अच्युतः प्रच्युतो यस्माच्छक्राद्याः प्रपलायिताः । स त्वया लीलया दग्धः करालस्त्रिपुरासुरः ॥५॥
पतद्गङ्गा तनोतिस्म ध्वनेस्त्रस्तां जगत्त्रयीम् । सा ते भाति मृणालीव जटाजूटोपवेष्टिता ॥६॥
वृषः सिंहः शिखी सर्पा मूषकोऽन्येऽपि तादृशाः । बन्धुभावेन वर्तन्ते त्वद्गृहे गिरिजापते ॥७॥
मौलौ ते मालतीमाला कल्लोलिन्या कलाधरः । अट्टहासो मुखे व्यालो गले गात्रं सुधोज्ज्वलम् ॥८॥
अकाण्डं ताण्डवं दृष्ट्वा कल्पान्ते गुहवाहिना । नूनं प्रबोधिता नाथ ताण्डवज्ञाः शिखण्डिनः ॥९॥

नीलं कण्ठे नीलकण्ठो नीलकण्ठस्य ते विभो। भावयन् प्रीतिमापन्नो नीलाम्भोदेऽनुरज्यति ॥१०॥
नूनं कृष्णो भवेत्पूर्वं शेषः काकोदरान्वयः। त्वत्परिग्रहतो नाथ धवलिम्नानुमण्डितः ॥११॥
फणिकङ्कणिने तुभ्यं पाणिनिः प्रणनाम यत्। तेन तेन वितेने तन्मुख्यं व्याकरणं क्षणात् ॥१२॥
मृकण्डुसूनुना नाथ गृहीतौ चरणौ तव। बहवः प्रलया दृष्टा द्रक्ष्यन्ते तेन ते पुनः ॥१३॥
ईशानस्तथेश्वराः केचित्त्वं महेशो महेश्वरः। देवा नटाश्च केचित्वं महादेवो महानटः ॥१४॥
काणान्धद्विदृशश्चान्ये त्वञ्च नाथ त्रिलोचनः। वृषच्छेदपरा अन्ये वृषारूढो विराजसे ॥१५॥
विशदस्त्वं परे कृष्णाः शिवस्त्वमशिवाः परे। अन्ये जनार्दनाः ख्याताः शङ्करस्त्वं सुविश्रुतः ॥१६॥
पञ्चाननो भवानन्ये चतुस्त्रिद्व्येकवक्त्रिणः। चतुर्भुजा द्विदोषाश्च परे दशभुजो भवान् ॥१७॥
एकैकमूर्तयश्चान्ये तवाष्टौ मूर्तयः श्रुताः। वैकुण्ठा इतरे प्रोक्तास्त्वमकुण्ठो विराजसे ॥१८॥
आशुतोषो भवानन्ये कष्टतोषा दुरासदाः। उपेन्द्राः केचिदाख्याता भवानिन्द्रादिभिः स्तुतः ॥१९॥
जालन्धरजिताः सर्वे त्वया जालन्धरो जितः। त्वया भस्मीकृतः कामः सर्वेऽन्ये कामकिङ्कराः ॥२०॥
भीता हालाहलादन्ये स तेऽभूत्कण्ठमण्डनम्। इत्थं वैषम्यसम्प्राप्तौ शम्भो केनोपमीयसे ॥२१॥
त्वज्जटावनसारङ्गी शृङ्गारो वसुधाश्रियः। भूतधात्री धृता येन स ते यज्ञोपवीतकम् ॥२२॥
अकामः कामदोऽन्येषां विषमाक्षः समेक्षणः। नगजाननपद्मार्को गजाननगुहात्मजः ॥२३॥
दोषाकरधरोऽदोष आशावासा विभूतिमान्। भुजङ्गेशः सदाचारो निर्गुणो गुणमन्दिरम् ॥२४॥
स्मरारिः स्मरतां नाथः कपर्दी च महेश्वरः। अजन्मा जनकोऽन्येषां त्रिशूली च निरामयः ॥२५॥
गङ्गाधरः सरिन्मौलिः कालकूटाशनोऽमृतः। त्रिधामा धामरहितो धवलो नीललोहितः ॥२६॥
धनाधिपसखो भिक्षुर्दन्दशूकप्रियो मृडः। पद्मासनः पञ्चमुखः पिनाकी योगतत्परः ॥२७॥
अनाथस्त्वं जगन्नाथो भीमस्त्वं भयनाशनः। भवस्त्वं भवहीनस्त्वमशिवैः सेवितः शिवः ॥२८॥
आशुतोषो दुराराध्यो नीलकण्ठोऽहिवल्लभः। अष्टमूर्तिरमूर्तिश्च स्थाणुर्मोक्षफलप्रदः ॥२९॥
श्रीकण्ठः पार्वतीकान्तो गोरक्षः क्षपितक्षितिः। विरुद्धो वाऽविरुद्धो वा तव तत्त्वं न विद्महे ॥३०॥
पुरन्दराभिधे राज्ञि पुरन्दरपराक्रमे। भुवं शासति गोरक्षाचलदुर्गकृतालये ॥३१॥
तेन दत्ताश्रयस्तेने भक्त्या शिवगुरोः शिवम्। शिवगोरक्षनाथस्य शिवरामकृती स्तवम् ॥३२॥
सर्वातिशयमैश्वर्यमैश्वरं द्योतयन् स्तवः। सर्वातिशयमैश्वर्यं तनुतां स्तुवतां नृणाम् ॥३३॥

॥ इति ॥

श्रीगोरक्षचरणकमलधूलिधूसरितमौलिसकलसामन्तमौलिमालालालितललितचरणयुगलपुरन्दरपराक्रमपुरन्दरपुराङ्गणगणिकागणजेगीयमानकीर्तिशशिकुलतिलकपारकोटियवंशावतंसस्वस्तिश्रीगिरिराजचक्रचूडामणिनरनारायणेत्यादिविविधविरुदाबलिबलितगोरक्षाचलाधीशश्री५मन्महाराजाधिराजपुरन्दरसाहदेवसमाश्रितसमस्तशास्त्रज्ञशिवरामशर्मकृतः शिवगोरक्षस्तवः सम्पूर्णः ॥

**॥ नमो गोरक्षाय शिवाय ॥**

### ४. गोरक्षभुजङ्गप्रयाताष्टकम्

**(गोर्खाका राजा नरभूपाल शाहको संरक्षणमा रहेका कवि लक्ष्मीश्वर सूरिद्वारा रचित यस गोरक्षभुजंगप्रयाताष्टकम्मा जटजूटधारी, चन्द्रोज्वल, हातमा लौकीद्वारा निर्मित पात्र धारण गर्ने, अत्यन्त यशस्वी, योगशास्त्रका प्रकाण्ड ज्ञाता र प्रयोक्ता, संसारको रक्षाका लागि अवतीर्ण भएका मृत्युञ्जय भगवान् गोरक्षनाथको स्तवन गरिएको छ।)**

लसद्दण्डदोर्दण्डसन्दीपिताशं जटामण्डलामण्डितोच्छीर्षमीशम्।
जरोत्फाटिके स्फाटिके सन्दधानं सुगोरक्षगोरक्षनाथं नताः स्मः ॥१॥
तडित्पातचञ्चन्नवीनाम्बुदाभां वसानं मृगेन्द्रत्वचं चन्द्रभासम्।
विभूत्या सभूत्याच्छटाच्छन्नवह्निं सुगोरक्षगोरक्षनाथं नताः स्मः ॥२॥
करेऽलाबुपात्रं स्मरोद्रिक्तगात्रं दधानं प्रधानं सुधाधानपात्रम्।
स्फुरड्डाकिनीवीरवेतालदात्रं सुगोरक्षगोरक्षनाथं नताः स्मः ॥३॥
यशःपूरकर्पूरसम्पूरिताशं चरद्भूचरीसिद्धमुद्राविलासम्।

लसत्खेचरीध्वस्तकालैकपाशं सुगोरक्षगोरक्षनाथं नताः स्मः ॥४॥
भयोद्भग्नभूतावलिं पाविशीलं भवोद्विग्नभूयोनिकेलिं सुखेलम्।
भवारण्यदावानलं चातिवेलं सुगोरक्षगोरक्षनाथं नताः स्मः ॥५॥
जगत्त्राणदक्षं नमत्प्राणपक्षं हठाकृष्टयोगं सदात्यक्तभोगम्।
वियच्चारिसञ्चारवर्त्मन्युदारं सुगोरक्षगोरक्षनाथं नताः स्मः ॥६॥
चलल्लोलकल्लोलसंसिक्तकायं सुधाम्भोनिधेर्योगिनीवृन्दमायम्।
जरामृत्युशंकाविहीनं वशीनं सुगोरक्षगोरक्षनाथं नताः स्मः ॥७॥
सुकन्थां वहन्तं दहन्तं विपाकं लिहन्तं परब्रह्म सच्चित्स्वरूपम्।
चिदानन्दसन्दोहविज्ञानमूर्तिं सुगोरक्षगोरक्षनाथं नताः स्मः ॥८॥
स्तवाधीशमेनं पठेदेकचित्तो वशे तस्य लोको भवेन्नान्यथा स्यात्।
असौ पातु राजेन्द्रचूडामणिन्तं नरध्वानपूर्वस्थभूपालसंज्ञम् ॥९॥
॥ इति श्रीगोरक्षाचलाचलापालनरभूपालभूपालपालितलक्ष्मीश्वरसूरिविरचितं गोरक्षभुजङ्गप्रयाताष्टकं सम्पूर्णम् ॥

५. गोरक्षनाथाष्टकम् (हंसचित्रम्)

**(भारतको राजस्थान प्रान्त अन्तर्गत जोधपुरका राजा मानसिंहदेवद्वारा रचित तैत्तिरीयोपनिषद्को भाव अनुसरण गर्ने यो गोरक्षनाथाष्टकस्तोत्रमा श्रीगोरक्षनाथलाई हंस परमात्माको रूपमा चित्रण गरिएको छ।)**

योगीन्द्राप्तहितोपदेशविशदादेशार्थतत्त्वं शिरो ज्ञानं कर्म च दक्षिणोत्तरगतावक्षोभ्यपक्षावसौ।
आत्मा योगवरः स्वरूपविषया पुच्छं प्रतिष्ठा चितो माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥१॥
द्वैतं दक्षिणपक्ष एष विहितोऽद्वैतं विविच्योत्तरः पक्षो योगशिरो विशेषपरमाद्वैतं तदात्मा महान्।
पुच्छं केवलभाव एव विदुषां हृत्पद्मनीडं महन्माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥२॥
ऐन्द्री दिक्शुभपूर्वरूपमतुलं पुच्छं प्रतीची दिशोदीची याम्यदिशावतीव विपुलौ दक्षौ हि पक्षौ हि तौ।
आत्मैवापदिशं दिशासु तरले सूर्येन्दुबिम्बे दृशौ माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥३॥
श्रुत्यन्ते कथितं शिरो महदिदं पक्षोऽयमत्रोत्तरः सोऽयं दक्षिणपक्ष एव विपुलः स्थूलोऽयमात्माचलः।
स्वच्छं पुच्छमिवेदमेव भुवनं नीडं सरूपाभिधं माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥४॥
प्राणो दक्षिणपक्ष एष विततोदानो भवत्युत्तरः पक्षो व्यानशिरो विशालहृदयं मध्यं समानोऽपरः।
वायुः पुच्छमतुच्छमेव भजतां नीडं निकायो जडं माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥५॥
भव्यं सत्यमृतं च पक्षयुगलं वाणी शिरः प्राणिना मात्माऽशेषविशेषदोषरहितः श्रद्धैव पुच्छं फलम्।
सर्वं तुच्छमनुप्रविश्य सहसाऽतुच्छं पुरा व्याकृतं माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥६॥
पश्यैतद्यजुरेव साङ्गमखिलं नित्यं शिरो निर्मलमृक्सामात्मकवेदयुग्ममतुलं पक्षद्वयं पक्षिणः।
आत्मादेशपरा ऋगेव सफलाऽथर्वैव पुच्छं परा माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥७॥
श्रुत्या जन्यमिदं प्रियं सितशिरो मोदप्रमोदावहं पक्षावुत्तरदक्षिणावसुभृदानन्दोऽयमात्मातुलः।
पुच्छं ब्रह्म तदादिवाक्यगतया वृत्त्योपलक्ष्यात्म तत् माया यस्य जगत्त्रयं विजयते हंसः स नाथो विभुः ॥८॥
मानेन मानेन समाश्रितानां मानं समानं मम नाथ ! भूयात्।
मानेन मानेन समाश्रितानां मानं समानं मम नाथ भूयात् ॥९॥
स्वस्ति श्रीश्रेयःश्रेणयः श्रीमतां समुल्लसन्तुतराम्।

॥ इति श्रीराजस्थानशेखरीभूतयोधपुराधिराजमानसिंहदेवविरचितं तैत्तिरीयोपनिषदनुसारं (हंसचित्रं) श्रीगोरक्षनाथाष्टकं सम्पूर्णम्।

६. श्रीनाथस्तोत्रराजः(शब्दचित्रमयः)

**(यस स्तोत्रको रचना पनि जोधपुरका राजा मानसिंहले गरेका हुन्। उनले आफ्नो विद्वत्सभामा रहेका विद्वान्हरूको सहयोगमा शब्दचित्रमय श्रीनाथस्तोत्रराजको रचना गरेका हुन्। यस स्तोत्रमा शब्दचित्रको माध्यमबाट हंसस्वरूप गोरक्षनाथको सर्वोपरि महिमा निरूपण गरिएको छ।)**

॥ श्रीनाथाय नमो नमो गुरवे ॥

नमोऽहं कलये हंसो हंसोऽहं कलयेऽन्वहम्। नमोऽहं कलये हंसो हंसोऽहं कलयेऽन्वहम् ॥१॥
अनन्यमानसो हंसो मानसं पदमाश्रितः। अनन्यमानसो हंसो मानसं पदमाश्रितः ॥२॥
र क्ष मा द क्ष गो र क्ष । क्ष र गो क्ष द मा क्ष र। ज य का म म हा रा ज, ज रा हा म म का य ज ॥३॥
घ न सा र द ना था य, य था ना द र सा न घ। ते स्तु मो न र धा मा हे, हे मा धा र। न मो ऽ स्तु ते॥
वि भु सं म त ना दो वा, वा दो ना त म सं भुवि। ते स्तु मो न य वा दे शं, शं देवाय न मो ऽ स्तु ते॥
न व पा र द सा या मा, मा या सा द र पा व न। ते स्तु मो न व मी ना र्या, र्या ना मी व न मो ऽ स्तु ते॥
व न जा नि व शा वे शा, शा वे शा व नि जा न व। का यि ना नु त शं खे न, न खे शं त नु ना यि का॥
किं न ही न ज रं दे वं, वं दे रं ज न ही न कि म्। दा स सा र स मा से वा, वा से मा स र सा स दा॥
स व ने ज य दे वे शा, शा वे दे य ज ने व स। ता र या ज र वै दे वे, वे दे वै र ज या र ता ॥९॥
भा शु भा स ज रा भा षा, सा भा रा ज स भा शु भा सा र रा ज त या भा सा, सा भा या त ज रा र सा॥
श्रीमानार्यकृतः समोऽप्युभयतः श्रीस्तोत्रराजोऽधुना नाथानां मुदमावहन् विजयते निर्णीतसारो रसः।
पक्षे दक्षविचारितेऽपि जनयन्नानन्दमन्यार्थदो बालानां शरणार्थिनां शरणदो वर्वर्ति सर्वोपरि ॥११॥

॥ शिवम् ॥

स्वस्ति श्रीश्रेयःश्रेणयः श्रीमतां समुल्लसन्तुतराम्।
॥इति श्रीराजस्थानशिखामणियोधपुराधिराजराजन्यशिरोमणिमानसिंहदेवकृतः श्रीनाथस्तोत्रराजः सम्पूर्णः॥

७. गकारादिगोरक्षसहस्रनाम

**(भगवान् गोरखनाथ नेपालका आराध्य योगीश्वर हुनुहुन्छ। उहाँलाई भगवान् शिवकै अवतार मानिन्छ। उहाँको स्तुति गर्दा भगवान् शिवसमेत प्रसन्न हुने कुरा विद्वान्हरूबाट छिपेको छैन। यस शीर्षकमा उहाँको १००० नाम र नामजपको महिमा बताइएको छ। यो स्तुति श्रीनाथमेघमाला नामक ग्रन्थबाट उद्धृत गरिएको हो।)**

॥ ॐ श्रीनाथाय नमो गुरवे ॥

देयाद्वो मङ्गलानां भुवि ततिमनिशं यस्य दृक्पातमात्रम् प्रादुर्भूतप्रभावाद्रचयति भुवनं विश्वयोनिः समग्रम्।
क्षोणीभारं विधत्ते शिरसि फणिपतिः शम्भुरत्ति प्रपञ्चं सोऽयं श्रीआदिनाथः सुरनिकरशिरोरत्ननीराजिताङ्घ्रिः ॥१॥
अहो नुमः श्रीयुतपादपद्मं मत्स्येन्द्रनाथस्य मनोज्ञमूर्तेः। सापत्यभावं प्रविहाय यत्र चक्रे निवासं कमला च गीश्च ॥२॥
यश्चादौ पद्मयोनिर्विसृजति निखिलं स्वस्वकर्मानुकूलं यश्चान्ते रुद्रनामा प्रलय इव जनं मोहलीनं करोति।
यः स्थाने विष्णुदेहस्त्रिजगदवनकृत् सिद्धयोगात्मकोऽसौ गोरक्षो वाञ्छितानां ततिमनवरतं वः प्रदेयात् त्रिमूर्तिः ॥३॥

अथ सहस्रनाम

गोरक्षनिपुणो गुह्यो गोभारार्तिनिषूदनः। गीर्वाणारातिविद्रावी गोपदानुगतिर्गुणी ॥४॥
गोभास्वान् गण्डमुद्रश्च गुणवद्व्यूहमानदः। गोवृत्तिदश्च गोराजो गोलोकवासिपूजितः ॥५॥
गुह्यकप्रेतक्रव्यादशाकिनीग्रहभञ्जकः। गतोपसर्गो ग्रन्थज्ञो गौरभूतिविभूषितः ॥६॥
गौराङ्गो गण्डमुद्रास्यो गौतमीनाथ एव च। गन्धात्मा गौतमत्राता गुरुतत्त्वार्थपारभृत् ॥७॥
गोरण्णाथो गवांनाथो गोमान् गोब्रह्मपालकः। गतक्रूरो गम्भीरात्मा गभस्तिशतचक्रभृत् ॥८॥
गणपो गणनाथश्च गणस्वामी गिरिप्रियः। गुरुदयो गुरूप्रार्च्यो गुरुदेवो गवेषकः ॥९॥
गगनो गतिमान् गौरतेजा गम्भीरशुद्धभूः। गतपाप्मा च ग्रन्थाग्र्यो ग्रामवासिजनार्थदः ॥१०॥
गुरुभर्गो गतव्यग्यो ग्रहपीडादिघस्मरः। ग्रामरक्षणसन्दक्षो गर्वकक्षहुताशनः ॥११॥
गर्भादद्भुतरूपाद्यो गान्धर्वीभीभयात्मकः। गीर्वाणेतरगोत्रघ्नो गणेशाशेषदर्पदा ॥१२॥
गीर्वाणगणदुर्दर्शो गोब्रह्मभयभञ्जनः। गतक्षोभो ग्रन्थनेता गूढकालयमान्तकः ॥१३॥
ग्रस्तासाध्यमहारोगो गुणवन्महदर्थदः। गुरुधर्माग्रगण्यात्मा ग्रहपीडादिमर्दकः ॥१४॥
गुणाकारो गुणान्तःस्थो गुणत्रयनिषेधकृत्। गोकोटिर्गोग्रहेशानो ग्रस्तपापो गदप्रियः ॥१५॥
गुण्याक्षरो गविष्ठश्च ग्लानिहा ग्लानिवारकः। गुहाशापूरको गण्यो गोपतापनिराकरः ॥१६॥

गङ्गाधरेष्टमन्त्रात्मा गुहागूढो गतभ्रमः। गोपको गतसर्वार्धिर्गीतिर्ज्येष्ठो गुहाक्षरः ॥१७॥
गतभावो गताभावो गताविद्यो गुणाग्रहः। गुहाध्येयो गुहाज्ञेयो गाढाङ्गो गूढविग्रहः ॥१८॥
ग्लास्नुतापापहर्ता च गङ्गाधरपरेश्वरः। गुरुर्जितप्रियाकारो ग्लानम्लानिनिषूदकः ॥१९॥
गभस्तिगर्वसंहर्ता गोकश्मलनिरासकृत्। गातृगीतो गुणागारो गुहाशायी गणाग्रणीः ॥२०॥
गुहाकमलमार्तण्डो गौणदुस्सहभावनः। ग्रन्थसंशयसंहर्ता गुरुमत्स्येन्द्रशिक्षितः ॥२१॥
गुणाग्रण्योऽथ गन्धेष्टो गिरिनारनिजासनः। गणकप्रवणाग्रण्यो गदाधरभयापहा ॥२२॥
गीर्वाणदुस्सहद्योतो गभीरो गतिरोचनः। गभस्तिकोटिसत्तेजा गन्धवाहाधिकप्लवः ॥२३॥
गुरुक्रमो गणाधीशो गौरास्यो गुणभूषितः। गणप्राज्ञो गणश्लाघ्यो गणसंविद्गणाग्रभूः ॥२४॥
गुणातीतोऽथ गुणभृद् गुणतत्त्वार्थविद्विभुः। गुणस्रष्टा गणेशश्च गणदेववरप्रदः ॥२५॥
ग्रन्थारम्भश्च ग्रन्थान्तो ग्रन्थकृद् ग्रन्थपादकृत्। गन्तव्यो ग्रन्थपारीणो ग्रन्थान्तर्यामिगुम्फकः ॥२६॥
गतपाणिर्गताङ्घ्रिश्च ग्रहीता गतिसर्वभृत्। गुप्तचक्षुर्गुणालोको ग्रन्थद्रष्टा गुणश्रुतिः ॥२७॥
गुरुसंसारदुःखघ्नो गौरभास्वत्सुशोभनः। गौरलक्षणसंलक्ष्यो गुरुद्रोहिबहिष्करः ॥२८॥
गुणाच्छेद्यवपुर्गम्यो गुणमाहात्म्यवेदितः। गौरभूर्गौरमुद्रश्च गलव्यालोपवीतकः ॥२९॥
गोमतीतीरतापघ्नो गुर्वीच्छादो गवेषकृत्। गौतमापत्तिसंहर्ता गोमतीपदपावनः ॥३०॥
गौरघृष्णिर्गुरुज्ञातो गौरज्ञानोपदेशकः। गोमद्वासिजनानन्दो गुरुविज्ञानसंस्कृतः ॥३१॥
गवाम्भर्ताथ गोनाथो गोपनाथेन नाथितः। गोष्ठप्रियो गवाधारो गोधुग् गोगुब् गुहादरः ॥३२॥
गोत्रभित्पूजिताङ्घ्रिश्च गौतमाश्रमखेदहृत्। गोमन्नाथो गुणाभेद्यो गुहावासी ग्रहाग्रहः ॥३३॥
ग्रन्थाद्यो ग्रन्थभाषार्थो ग्रन्थसारार्थविद्वरः। गुहाकञ्जाशयो गोदृग् ग्रन्थसिद्धान्तशाश्वतः ॥३४॥
गौरहृत्कञ्जसंवासी गायकेष्टफलार्थदः। गन्धर्वपालिवर्षिष्ठो गुणानन्तविलासयुक् ॥३५॥
गन्धानुलिप्तदिव्याङ्गो गुणनाथो गुणिप्रियः। गिरीशार्चितपादाब्जो गोसर्पिःपानचञ्चलः ॥३६॥
गङ्गावीचिविधौतोत्तमाङ्गश्च गतविज्वरः। गन्धर्ववेदसम्पन्नो गुणरक्षो गुणैकदृक् ॥३७॥
गुणग्रामो गुणारामो गाननाथो गणाक्षयः। गुरुशास्त्रार्थनैपुण्यो गुणोत्तीर्णो गदाग्रणीः ॥३८॥
गुरुसन्देहसञ्छेत्ता गुह्ययोगप्रदीपकः। गुह्यार्को गुरुनाथश्च गोत्रकेतुर्गतक्लमः ॥३९॥
गीतागीतविशेषज्ञो गोकष्टशतशातकः। गोचरो ग्रन्थविघ्नघ्नो गर्वमानविभञ्जनः ॥४०॥
गवीशो गौरभूर्गोमी गर्भस्थपरिपालकः। गोकालशेयसम्पायी गोपीयूषसुखाशनः ॥४१॥
गिर्यरण्याश्रमस्थायी गोकोटिपायसादनः। गर्गशास्त्रप्रवीणात्मा गर्गशास्त्रार्थसिद्धिदः ॥४२॥
गरीयान् गुणसम्पन्नो गृहिसन्तापमोचनः। गर्भत्राता च गृष्टीशो गोगृष्टिगणपालकः ॥४३॥
गिरिनारगुहावासी गीर्वाणागमसर्ववित्। गोष्ठप्रियो गतीशानो गजाश्वान्तविभूतिदः ॥४४॥
गवेन्द्रो गानसंवेद्यो गीर्वाणगणसंस्तुतः। गङ्गातीरप्रियावासो गन्धाकृष्टमधुव्रतः ॥४५॥
गौरयोगप्रसन्नात्मा गणानीकशुभावहः। गलशोभिबृहन्नादो गुम्फप्रणयपण्डितः ॥४६॥
गूढोऽत्मा गणकाग्रण्यो गिरिरैवतवासकृत्। गिरिरैवततापघ्नो गिरिरैवतपालकः ॥४७॥
गिर्यर्बुदशिरःस्थायी गिर्यर्बुदसदाचरः। गिर्यर्बुदशिरःस्थाता गिर्यर्बुदसुखासनः ॥४८॥
गजारिशतविक्रान्तो गीतकीर्तिर्गुरुद्युतिः। गुहार्थदो गुहस्वामी गवीशो गोभयापहः ॥४९॥
गुण्यालयो गुरुश्रेयान् गुरुहत्याविमोचनः। गुणोत्कर्षो गुणाध्यक्षो गुण्येतरनिषेधकृत् ॥५०॥
ग्रन्थनिर्माणचातुर्यो गुहाव्यापी गतश्रमः। ग्रन्थार्थवृद्धिकृद् गोभृद् गौरवामयधग् गुरुः ॥५१॥
ग्रन्थरुढार्थसर्वज्ञो गूढयोगार्थकुञ्चिभृद्। गूढनामा गतिश्रेष्ठो गोस्वामी गोभयापहा ॥५२॥
गूढवर्णसमाम्नायो ग्रन्थसन्दर्भभाववित्। गोधीरो गहनो गोमी गोत्राभारनिराकरः ॥५३॥
गुरूपुत्रेष्टसंयोक्ता गौरविद्यो ग्रहाग्रणीः। गुणाचिन्त्यो गुणानन्तो गुणचिन्मयलक्षणः ॥५४॥
गुरूपमादिसन्नाथो गुरुगोरक्षसंज्ञितः। गोत्रभिद्भयविद्रावी गौरयोगसुधानिधिः ॥५५॥
गतरोगो गवामीशो गुणवद्गणपूजितः। गुणभूर्गाननैपुण्यो ग्रन्थभूर्गीविदाङ्गतिः ॥५६॥
गुणच्छद्मा च ग्रन्थेष्टो ग्रन्थाधारो गतिश्रितः। ग्रन्थवन्मानदो गोप्यो गुणनेत्रसमुज्ज्वलः ॥५७॥
गुप्तवस्तुर्गणेशानो गुणान्तर्भूतचिन्मयः। गणराजो गणस्नेहो गुरुदेवपुरातनः ॥५८॥
गृहीतो गुणवान् गोपो गुरुधामा गुरुत्तमः। गुणविच्छिष्यशन्दायी गोत्रभिद्प्राणवल्लभः ॥५९॥

गुरुयोगासनस्थाता गुरुभावविभाषणः। गीतनादप्रसन्नात्मा गीतलीलो गुरुक्रमः ॥६०॥
गुरुश्रीर्गुप्तधामा च ग्रथितो गुह्ययोगभूः। गुरुव्यवसितोत्कृष्टबुद्धियोगप्रदायकः ॥६१॥
ग्रन्थोद्दीपोऽथ गुणधृग् गुणकृद् गुणहृद् गुहः। गुणाविर्भूतब्रह्माण्डो गुणम्मन्यो गुणोर्जितः ॥६२॥
ग्रन्थकृदीष्टशन्दाता गुरूपाशापहो गतिः। गौरसत्याव्ययानन्तो गुरुब्रह्माद्वितीयकः ॥६३॥
गौरघृष्णिप्रभादीप्तो गोत्रवृन्दभयापहः। गोत्रगोत्रप्रभुर्गोत्रवरो गन्थी गताशयः ॥६४॥
गूढवेदार्थसंवेद्यो गूढोपनिषदव्ययः। गुरुमत्स्यमहेशानो गुरुमत्स्येन्द्रनन्दनः ॥६५॥
गम्यार्थो गौरगन्धाप्तो गन्धर्वानीकनायकः। गीर्वाणार्चितपादाब्जो गीर्वाणानीकनन्दनः ॥६६॥
गुडाकेशगतिर्गन्थोत्कृष्टो गन्धर्वराजभाः। गुडाकेशसमाराध्यो गन्धर्ववरवीजितः ॥६७॥
गिरित्रो गौश्च गीस्त्राता गिरित्राभीष्टदायकः। गृहीतगुणगो गाथी गर्भगुब् गेयकृन्मृदः ॥६८॥
गुणाहितकुलत्रासो गणाधारो गणैकपात्। गम्भीराप्राकृतज्योतिर्गम्भीरास्यो गवादृतिः ॥६९॥
गम्भीरनिम्ननाभिश्च गम्भीरजलदध्वनिः। गतजन्मजरामृत्युर्गन्धवत्कञ्जमुन्मुखः ॥७०॥
गम्भीरानन्तशुद्धात्मा गर्भावासविनाशकृत्। गम्भीरपदविन्यासो गीर्वाणभयनाशकः ॥७१॥
गोपेशोऽथ गृहस्वामी गोगोपनपरायणः। गजाजिनपरिश्लिष्टो गोपथानुप्रवर्तकः ॥७२॥
गजार्यजिनसंवीतो गौरयोगविदांवरः। गुरुसिद्धो गुहागारो गुही ग्रामपुरादिपाः ॥७३॥
गभस्तिकर्णमुद्रास्यो गुर्वनुज्ञाप्रपालकः। गुरुदैत्यकुलोच्छेत्ता गौरवाग्र्यो हि गोशिवः ॥७४॥
गतार्तिर्गतसंसारो गतदर्पो गतज्वरः। गताहङ्कारवैचित्यो गतसङ्कल्पकल्पनः ॥७५॥
गन्धर्वाराधिताङ्घ्र्यब्जयुग्मश्चैव गिरीश्वरः। ग्रन्थवान् ग्रन्थवक्ता च ग्रन्थकृद्वृन्दवन्दितः ॥७६॥
गीर्जन्मा गूढविच्छ्रेष्ठो गुरुवात्सल्यधृग् गतिः। गुरुभीतिप्रमदी च गुर्वर्तिवृन्दभेदकः ॥७७॥
गूहो गूढतमो गुप्तो गीष्पतिर्गीतिनायकः। गम्भीरीगन्धसंल्लुब्धो ग्रन्थलोलाल्यलङ्कृतः ॥७८॥
गोपो गोप्यतरो गुह्यो गुण्यशृङ्गिनिनादभृत्। गुप्तागुप्तो ग्रन्थबलो ग्रन्थार्थप्रतिपादितः ॥७९॥
गणकप्रीतिकृद् गर्गदेवो गर्गादिसत्कृतः। गोरक्षगणकाग्रण्यो गोरक्षाबलिकृत्तमः ॥८०॥
ग्रन्थपारायणप्राप्यो गुह्यग्रन्थार्थदीपकः। गौरयोगार्थतत्त्वज्ञो गुरुवेदनिरूपितः ॥८१॥
गणराडर्चितो नित्यं गोविन्दार्यस्मृतिप्रदः। गोविन्देष्टप्रियादाता गौरापारपराक्रमः ॥८२॥
गोविन्दात्मा च गम्भीरो गीःप्रियङ्कर एव च। गूढजत्रुर्ग्रस्तशोको गुणागुण्यो गुणालकः ॥८३॥
ग्रन्थप्रयोजको गौरमर्यादो ग्रन्थकेतनः। ग्रन्थार्थद्योतको गोदो ग्रन्थसिद्धास्तभास्करः ॥८४॥
गायकप्रवरप्रेष्ठो गायकेष्टार्थदायकः। गायकवादकनर्तकार्यकानन्दमुक्तदः ॥८५॥
गोङ्कारवीजसंश्लिष्टो गुह्यसोऽहंशिवात्मकः। गुरुशिष्यार्थितार्थज्ञो गौरहंसो गुणावृतः ॥८६॥
गन्धर्वदेवसेव्याङ्घ्रिर्गन्धर्वपरमेश्वरः। गौरसिद्धो गुणावश्यो गौरधर्मज्ञ एव च ॥८७॥
गुडाकाहृद् गोपरेशो गिरात्मा गीःप्रियंवदः। गालवर्षिप्रियापाद्यो गोष्ठामयविघस्मरः ॥८८॥
गायत्रीमन्त्रविद्वेद्यो गोचरप्रियवर्धनः। गमको गौतमो गाता गतियाथार्थ्ययोगकृत् ॥८९॥
गोकर्णारण्यसंरन्ता गोकर्णाश्रमवन्दितः। गान्धारनिर्भयारामो गान्धारक्षोणिपालकः ॥९०॥
गुप्तार्थदो गुणागम्यो ग्रन्थप्रकटपौरुषः। गतिभृद् गम्यमूर्तिश्च गुणादिशिवसंश्रुतः ॥९१॥
गिरागम्यो गवामीशो गिरर्थार्थो गिरांवरः। गृहीतगुणवल्लीलो गानविज्ञानपारदः ॥९२॥
गव्यापालो गण श्रीशो गोस्वयम्भूर्गणेष्ठभूः। गणनाथो गुहानिष्ठो गानो गानी गमात्मकः ॥९३॥
गुणागुणगणातीतो गुणत्रयविभावनः। गोत्राचारप्रियो गोत्री गोत्रानाथो गुणाकरः ॥९४॥
गायमानप्रियो ग्लौभृद् गीताङ्गो गीतपेशलः। गानसामसमागेयो गणदुष्कृतनाशनः ॥९५॥
गीर्वाणभाषासम्भाष्यो ग्रीवागरलशेषभृत्। गणराजाधिराजश्च गतिमान् गणवान् गणी ॥९६॥
गुणसृग् गतिधृग् गेयो गर्ववद्दुःखकृत्तमः। गुणभ्राजो गणश्रेष्ठो गुणकृद् गुणहृद् गृहः ॥९७॥
गुरुज्ञानो गुणाम्भोधिर्गुहाधामा गणप्रभुः। गोप्यमूर्तिर्गृहीतार्थो गृहीतगुणकञ्जगत् ॥९८॥
गोत्रापालकपालेष्टो गाननादज्ञमन्मथः। गोपस्तोमप्रियानन्दो गौरस्वाध्यायवेदितः ॥९९॥
गोत्राल्हादकमूर्तिश्च गुणतत्त्वविवेककृत्। गोवेद्यो गोऽर्थविद् गद्यो गद्यभाषाप्रभाषणः ॥१००॥
गतोर्मिषट्कवर्षिष्ठो गुणषट्कप्रधानजित्। गतकारणकार्यश्च गतसाम्यातिशायकः ॥१०१॥
गतसर्वावतारत्वावतारिभेदकल्पनः। गुह्यप्रणवचिन्नादो गुहास्थानस्थिरासनः ॥१०२॥

गायत्रीजपसंसाध्यो गायत्रीमत्प्रपूजितः। गायत्रीमद्‌गुणाकारो गायत्रीमत्परात्मकः ॥१०३॥
गायत्रीमत्सदातुष्टो गायत्रीमत्सदाशिवः। गायत्रीमदधिष्ठाता गायत्रीमत्फलात्मकः ॥१०४॥
गायत्रीमत्सदासेव्यो गायत्रीमद्यशोवहः। गायत्रीमद्‌गृहान्तःस्थो गायत्रीमत्सुखालयः ॥१०५॥
गायत्रीविदुषांवर्चो गायत्रीमद्विवर्धनः। गवात्मवान् गवां वाग्मी गणशत्रुनिवर्हणः ॥१०६॥
गायत्रीमन्महालोको गायत्रीमत्प्रियङ्करः। गायत्रीमत्कुलानन्दी गायत्रीमद्धुरन्धरः ॥१०७॥
गौरीसरोनिजानन्दो गौरीशसरआश्रमः। गौरीसरस्तपःस्थायी गौरीशसरआसनः ॥१०८॥
गोस्तनीफलभुग् गाढो गौरगात्रो गवायनः। गोग्रामणीर्गुणग्रामो गाढानुग्रहकारकः ॥१०९॥
गुरुमोहनिराकर्ता गाथाम्नायदिवाकरः। गरागरासमारन्ता गोस्तनीफलभोजनः ॥११०॥
गुरुयोगफलस्रष्टा गाढानन्दामृतात्मकः। गाढयोगान्तरात्मा च गाढयोगपुरातनः ॥१११॥
गुणातिशयवान् गण्यो गुण्यो गुणपरायणः। गोसिद्धसाधनानाथो गूढसत्परमार्थदः ॥११२॥
गुरुसद्‌गुरुनामा च गुरुशैवशिवार्थदः। गुप्तावधूतशैलीभृद् गुरुयोगिशिवात्मकः ॥११३॥
गूढसिद्धान्तसंसिद्धो गतक्लेशतरङ्गकः। गताखिलाधिसन्नाथो गुह्यस्वस्मरभूतिमान् ॥११४॥
गुह्योङ्कारप्रतिष्ठानो गुहाकञ्जस्थिरासनः। गूढाधारोदयो गोधा गताखिलकलङ्ककः ॥११५॥
गुर्वङ्गभूतिभूषाढ्यो गुरुशो गुरुखात्मकः। गुह्यात्मपरधामा च गुह्यशङ्खसुखार्थकृत् ॥११६॥
गोप्यशङ्खशिरोधायी गाढनिस्सीमसौहृदः। गौरमृगाजिनाधर्ता गुरुशैलीपरार्थवित् ॥११७॥
गुणषड्‌वैकृतातीतो गौरपद्धतिपादुकः। गुह्यचिदुल्लसन्मुद्रो गोऽजपाजापशान्तिकृत् ॥११८॥
गुह्यधैर्यपराशक्तिर्गुहादीपनविग्रहः। गौरचिन्मेखलाधारी गुह्ययोगसुवस्त्रभृत् ॥११९॥
गताद्वैतेतराभासो गाढतन्मयकारकः। गतोपाधिनिजानन्ददिग्देशसुदृढासनः ॥१२०॥
गुहाप्रादेशनिलयो गुहासाक्षात्प्रकाशकः। गतमृत्युमहामोहो गाढाजाजवनीनटः ॥१२१॥
गाढवासनवल्लीभुग् गुहात्मज्ञानसर्वगः। गाढावर्त्तजगद्वेत्ता गतोत्थानमयात्मकः ॥१२२॥
गतोत्थाधारधर्मज्ञो गतविश्रान्तिचिन्मयः। गृहीतचिन्मयाकारो, गृहीतपदमुक्तिदः ॥१२३॥
गुर्वाज्ञो गौरसिद्धेन्द्रो गुहादेशसदाऽमृतः। गणशुद्धो गणाभिज्ञो गात्रोद्धारकप्रभुः ॥१२४॥
गात्रसत्यो गवेषेष्टो गाढभोक्ता गुहाचलः। गतव्यामोहमात्सर्यो गुरुज्ञानप्रबोधकः ॥१२५॥
गतपारमहामोहतरङ्गाब्धिविशोषणः। गतभीर्गतदैन्यश्च गतलज्जो गतामयः ॥१२६॥
गतशोको गतार्तिश्च गाढालस्यविवर्जितः। गाढमोहमदच्छिच्च गाढदम्भासुखावहः ॥१२७॥
गतमायो गतभ्रान्तिर्गुर्वाज्ञामार्गदर्शकः। गाढाहङ्कारशून्यश्च गर्वमोहपराङ्‌मुखः ॥१२८॥
गतात्यन्तमदक्रोधो गाढाविद्याख्यदोषमुद्। गतकामाङ्कुरो गाढासूयाधर्मपराङ्‌मुखः ॥१२९॥
गुणवद्वादसद्वक्ता गुणवच्छास्त्रविद्विभुः। गुणवद्योगसन्तानो गुणवद्योगसिद्धिदः ॥१३०॥
गुणेन्द्रियतिरस्कर्ता गुणवन्मानवर्धनः। गुणवत्सम्प्रदायेष्टो गुणवद्‌गुणशोधकः ॥१३१॥
गर्भामयनिराकर्ता गर्ववत्कुलकन्दनः। गर्ववत्प्राणसंहर्ता गुणवद्‌वृत्तिदायकः ॥१३२॥
गूढपिण्डादिभूजन्मा गात्रशोधकनामकः। गतसर्वासुरव्यूहो गूढशक्तिप्रदीपकः ॥१३३॥
गुणापारापराशक्तिर्गुणवत्परशक्तिकः। गुणवत्सूक्ष्मशक्तिज्ञो गुणवन्निजशक्तिकः ॥१३४॥
गन्धर्वप्राणपालेशो गीर्वाणबलवृद्धिकृत्। गीर्वाणलोकधृङ्नाथो गाढेच्छो गतिभोगदः ॥१३५॥
गृहीतज्ञानकृन्मूर्तिर्गृहीतो गिरिगो गदः। गोपगीतिप्रसन्नात्मा गिरिराजेष्टसाधकः ॥१३६॥
गणकप्रवरप्राज्ञो गर्गाहर्गणशक्तिकृत्। गणकानांपतिर्गोष्ठो गौरवाणीश्वरेश्वरः ॥१३७॥
गिरीन्द्राभयमूर्तिश्च गुहाचिन्तितपूरणः। ग्रन्थसर्वस्वरूपार्थो गीतालापविचक्षणः ॥१३८॥
गीःश्रेष्ठो गुणसम्पन्नो गीर्वाणेन्द्रशिरोमणिः। गृहीतयोगसन्मूर्तिर्गृहीतस्थिरशेमुषिः ॥१३९॥
गन्धर्वराजराजेष्टो गीर्वाणप्रपितामहः। गीर्वाणेन्द्रार्चितापादपीठो गौरववस्तुभूः ॥१४०॥
गुणमात्रसदासाक्षी गुणिरूपो गुणिप्रदः। गायको गन्धवानग्र्यो गीर्वाणेशशतोदितः ॥१४१॥
गुहानादप्रवीणश्च गुहानादजनिश्रुतः। गुहापश्यन्तीभूर्गूढमध्यमानादभून्मतः ॥१४२॥
गीर्देवो ग्लासकृद् गर्वो गोःसेव्यो गीः प्रियङ्करः। गीःशोकार्त्तिहरो गोविद् गिरनर्थार्थखण्डनः ॥१४३॥
गम्भीरैश्वर्यसंसिद्धो गाढापद्विनिवारकः। गन्धर्वलोकभीभ्रंशी गुणिशुद्धो गुणीष्टभूः ॥१४४॥
गुणोन्नीतो गुणोल्लासो गुणभ्राड् गीर्नमस्कृतः। गणार्ह्यो गणसंवीतो गर्मुदासनसंस्थितः ॥१४५॥

गोयोगपद्धतेः कर्ता गुरुयोगविभूतिवित् । गोयोगवस्तुसन्दर्शी गम्भीराजपमन्त्रदः ॥१४६॥
गुरुसोऽहंसुमन्त्रज्ञो गूढयोगविभूतिवित् । गोसत्यज्ञानचिद्ब्रह्म गुरूपाद् गुरूपादुकः ॥१४७॥
गूढपादो गुडाकाजिद् गुहाश्रेष्ठो गुहाश्रितः । गतसर्वेन्द्रियाभासो गाथागेयो गतानृतः ॥१४८॥
गुरूपुत्रस्तवाराध्यो गुरूपुत्रार्चिताङ्घ्रिकः । गुरूपुत्रेष्टसिद्धेःकृद् गुरूपुत्रमहाप्रियः ॥१४९॥
गुरुयोगसमृद्धीशो गुह्ययोगविभावनः । गौरपुण्यकथो गौरकाव्यो गीतविशारदः ॥१५०॥
गाथागीतो गतीशश्च गौरैश्वर्यो गणार्तिभित् । गौरभैरवसोऽहञ्ज्ञो गौरलोकफलप्रदः ॥१५१॥
गुरुभक्तसुखाम्भोधिर्गौरसूरशतप्रभः । गौरवाणीशसद्रूपो गोप्यपातञ्जलस्मृतः ॥१५२॥
गीतकाव्यकथालापविदग्धो गीतगायकः । गोत्रैकविशदो गोत्रात्राणनन्दनकारकः ॥१५३॥
गोत्राचातकजीमूतो गोत्रागणनतत्परः । गतागतबहिर्भूतो गोनित्यो गुणदच्छविः ॥१५४॥
गताकारो गुणानन्दो गुण्यस्मितविभूषितः । गौरभस्मावगुण्ठाढ्यो गुण्यमालाविराजितः ॥१५५॥
गोवर्धनधरप्रेष्ठो गोपमण्डलमध्यगः । गोपकश्चैव गोपीथो गवानुगतिशोभनः ॥१५६॥
ग्लान्यादिपारतन्त्र्यादिविशेषरहितः सदा । गायत्रीयोगसंस्नातो गायत्रीजपतत्परः ॥१५७॥
गायत्रीमूलसर्वज्ञो गायत्र्यजपजापकः । गौरब्जमाली गुह्यार्थ्यो गौरगोकुलरक्षकः ॥१५८॥
गोयमप्रेष्यभीभूतो गोकालभयनाशकः । गोविश्वपालको गन्धमादनानन्दनन्दितः ॥१५९॥
गौतमादिमहर्षीशो गुरुर्गौतमशास्त्रदः । गौतमन्याययुक्त्यात्मा गौतमज्ञानदीपकः ॥१६०॥
गोत्राविलासगर्विष्ठो गोत्रारक्षी गतोन्नतः । गोदेवब्रह्मवर्त्मात्मा गोब्राह्मणशिरोमणिः ॥१६१॥
गोब्रह्मदेवतादुर्गो गोब्रह्माशनिपञ्जरः । गतसर्वभयभ्रान्तिर्गतसङ्गो गजाञ्जनः ॥१६२॥
गूढकूटस्थधामा च ग्रस्तकालभयव्यथः । गूढातिगोमनोवाचां गूढसङ्कर्षणात्मकः ॥१६३॥
गूढहेतुर्गृहीतज्ञो गृहिसर्वाभयङ्करः । गूढाविश्वो गतोन्नाहो गताशीर्गोदुरासदः ॥१६४॥
गूढसर्वगतिर्गूढमहारुद्रो गुहान्तरः । गतसर्वानृतालोको गूढकाम्यो गवामृतः ॥१६५॥
गवानुल्लङ्घ्यनामा वै गूढसर्वसुखैकभूः । गूढविश्वपिता गूढविश्वतोमुख एव च ॥१६६॥
गीःसर्वाश्चर्यसम्भूतिर्गुरुसर्वविकारहृत् । गौरसर्वार्थिविश्वात्मा गतिसर्वशरीरीरिजित् ॥१६७॥
गाढानन्तपदाशक्तिर्गतापत्तिर्गवाक्षरः । गाढस्नेहो गुहाहंसो गुहासोऽहंनियोजकः ॥१६८॥
गूढाचेतनजीवेशो गाढानन्तयशाः स्मृतः । गोत्रैकविस्फुरद्वीर्यो गताहंवाद एव च ॥१६९॥
गतापारो गविष्ठाद्यो गुणकल्याणसागरः । गिरीशब्रह्मवैकुण्ठाद्युत्कृष्टतरचेतनः ॥१७०॥
गुहान्तर्यामिभ्राजिष्णुर्गौरीकोट्यरिमर्दनः । गभस्तिमदनन्ताभो गुह्यकेशविभूतिदः ॥१७१॥
गात्रहीनशतानन्तरूपलावण्यसागरः । गिरीशब्रह्मविष्ण्ववाख्यजगद्भङ्गादिकारकः ॥१७२॥
गाढकालमहाकालो गाम्भीर्गौदार्यसागरः । गोत्रादुग्धसुधामोदी गाढाकाव्यकथोदितः ॥१७३॥
गाथाविदग्धो गौरीष्टो गद्यपद्यप्रदीपनः । गुह्योपनिषदावेद्यो गुह्यब्रह्मशिवात्मकः ॥१७४॥
गिराद्यो ग्रन्थिहृद् ग्रन्थी गुणवृद्धिप्रयोजकः । गुणर्धिदश्च सर्वेषां गीष्पतीश्वरपुङ्गवः ॥१७५॥
गाढाधाराधरो गुप्तस्वाधिष्ठानदृढासनः । गभस्तिमणिपुरार्को गुहानाहतचक्रभः ॥१७६॥
गुहाञ्जवासी गगनमहापद्मपदाश्रयः । गलदेशविशुद्धस्थो गलत्पीयूषजोषणः ॥१७७॥
गोब्रह्मरन्ध्रवेश्मार्को गगनाकृतिनिर्मलः । गतमान्द्यो गुणप्रज्ञो गूढाज्ञाचक्रभास्करः ॥१७८॥
गुरुसिद्धासनस्थायी गुहापद्मासनस्थितः । गूढाधाराद्युपादेष्टा गोप्यलक्षविचारकृत् ॥१७९॥
गुहास्तम्भोपदिष्टात्मा गोप्यशून्यविधानदः । गोप्यदेवो गतद्वन्द्वो गौरदेवो गतत्रिवृत् ॥१८०॥
गेष्णुर्गेष्वाश्रयो गेष्णुपतिर्गेष्णुनटप्रियः । गोरग् गोरक्षनाथश्च गोधूमाराध्यविग्रहः ॥१८१॥
गोपा गोपाप्रियो ग्राहो गोपार्ह्यो गोष्ठपालकः । गुप्तो गोपालनामापि गौष्ठीनस्थो गवीश्वरः ॥१८२॥
गङ्गामौलिर्गवामीशो गोगम्यो गोविदाङ्गतिः । गवेड्यो गगनाकारो ग्रस्ताधिर्गोधरो ग्रही ॥१८३॥
गोधनो गोधनाधीशो गुप्तवस्तुज्ञ एव च । गोकुलो गुप्तगुर्गोधुग् गोरजश्छुरिताकृतिः ॥१८४॥
गुप्तेन्द्रियकुलो गुप्तगोरक्षो गोमताङ्गगतिः । गूढात्मा गुप्तगोरूपो गोपज्येष्ठो गवाङ्गतिः ॥१८५॥
गेष्णुप्राणो गुणागम्यो गेष्णुसर्ववित् । गुणप्राग् गुणधामा च गोदानविधिवेदकः ॥१८६॥
गोष्ठीपालो गीतिपटुर्गीतिगीतो गतालसः । गोपिकागीतसन्तुष्टो गीतागीतविशारदः ॥१८७॥
गीतिप्रीतो गुहागुह्यो गुह्यगीतविवेचकः । गीतोपनिषदागम्यो गीतोपनिषदक्षरः ॥१८८॥

गुणविद् गुणमर्यादो गन्धग्राही गुणोत्कटो गोजित्। गर्गानुग्रहकर्ता गर्गाचार्यभ्रमार्तिसंहर्ता ॥१८९॥
गर्गप्रत्यर्थिघ्नो गीर्वाणेशादिसंस्तुतो गोभ्राट्। ग्रहदोषनिराकर्ता गोत्रप्राणोऽथ गर्वविच्छेत्ता ॥१९०॥
श्रीगोरक्षसहस्रनामकमदस्त्रैलोक्यभूषास्पदं शक्राद्यैरखिलैरजस्रममरैस्तोष्टूयमानं भृशम्।
गादिग्रन्थनिगुम्फितं शुभतरं विद्वज्जनानन्दनं योगीशानतुतं सदास्तु भवतां तुष्ट्यै च पुष्ट्यै मुदे ॥१९१॥
स्वस्ति श्रीश्रेयःश्रेणयः श्रीमतां समुल्लसन्तुतराम् ॥

॥ इति श्रीनाथमेघमालायां गकारादिगोरक्षसहस्रनाम सम्पूर्णम् ॥

## ८. लोकनाथाष्टकम्

**(यस शीर्षकमा भगवान् गोरक्षनाथको चरित्र बताइएको छ र गोरक्षनाथको र मत्स्येन्द्रनाथको सम्बन्धको बारेमा पनि चर्चा गरिएको छ।)**

श्रीमल्लोकनाथाय नमः।

उत्तुङ्गे शिखरे सुरम्यगहने गोरक्षनाथो विभुः कृत्वैकत्र महाहिमेघवलयं सिद्धाचले निश्चलः।
याता द्वादश वत्सरास्तनुभृतां कष्टेन वृष्टिं विना हंहो केन न नास्तिकेन नियतं कर्मार्जितं भुज्यते ॥१॥
चिन्ताक्रान्तनरेन्द्रदेवनृपतिर्निश्चित्य सार्धं बुधैर्मत्स्येन्द्रेण विना न वर्षशतकैरुत्थास्यति स्थानतः।
तावद् वृष्टिरपीह नेति विदधे योगिस्वरूपं प्रजारक्षार्थं स च बन्धुदत्तसहितः कामाख्यपीठं ययौ ॥२॥
स्थितः कामपीठे नृपो लोकनाथं समाराधयन् बन्धुदत्तेन सार्धम्।
प्रसाद्यानिनायाथ नेपालमध्ये समध्यासिते सिद्धसाध्यादिदेवैः ॥३॥
प्रसिद्धेऽत्र सिद्धाचले सिद्धराजः प्रबुद्धः समाधेः समाधाय चित्तम्।
ननामाथ सिद्धासनादुत्थितः सन् गुरुं मत्स्यमूर्तिं घनालिः प्रमुक्ता ॥४॥
सुधावृष्टिवद् वृष्टिरासीत्तदानीं प्रजा ज्ञाततत्त्वा सपर्यापराभूत्।
तदादेशतो नात्र कुत्रापि राज्ये महास्नानमुख्याद् विशामीतिभीतिः ॥५॥
कृतादेशतो देशिकादेशतोऽसौ विधायाभयं भाति गोरक्षनाथः।
नरेद्रादिभूपालनेपालराज्यं विधायाशु गोरक्षराज्यं गरीयः ॥६॥
अथोऽत्रैव मत्स्येन्द्रगोरक्षनाथौ रथस्थौ पृथिव्या व्यथापाकृतौ स्तः।
प्रजाराजभिश्चैव राजोपचारैः सदा पूजितो सर्वतो मन्दिरेषु ॥७॥
विशालेऽत्र नेपालसिद्धाचलेऽयं प्रसिद्धश्च सिद्धाश्रमः सिद्धसेव्यः।
सदा प्राणिभिः प्रेमतः प्रार्थितोऽयं यदात्मात्र गोरक्षनाथो विभाति ॥८॥
लोकनाथाष्टकं रम्यं लोकेनाथशिवङ्करम्। लोकतापापहं पायात्पठतां भक्तिभावतः ॥९॥

॥ शिवम् ॥

## ९. ॐ गोरक्षाष्टकम्

**(मृगस्थलीमा विराजमान भगवान् गोरक्षनाथको स्तुति र उहाँका विशेषताहरूलाई यस शीर्षकमा प्रकट गरिएको छ।)**

नमो गोरक्षनाथाय मृगस्थलीकाननशृङ्गपीठे स मेघमालाहिकृतासनस्थः।
स्वात्मावधानाख्यसमाधिदक्षो गोरक्षनाथो भुवि रक्षतान्नः ॥१॥
सृजञ्जगत् कल्पनयाऽविलम्बतो विलापयन् कल्पनया निमेषतः। प्रपालयंल्लौकिकलीलयाऽलयः पुनातु गोरक्ष इति श्रुतः क्षितौ ॥२॥
यदा भुवो भारमवेक्षतेऽक्षयस्तदा तमक्षीणमहाः क्षिणोत्यसौ। अलक्ष्यरूपोऽप्युपलक्षिताकृतिस्तनोतु गोरक्ष उदारसम्पदम् ॥३॥
तपस्विनो योगरता मनस्विनः क्षमाभुजः शास्त्रयुजः सुधाभुजः। जपन्ति जप्यामजपामहर्निशं त्वयीह गोरक्ष विलीनमानसाः ॥४॥
सकुण्डलं पिङ्गजटं मृगाजिनं सनादमूर्णाविहितोपवीतकम्। किशोरगात्रं स्फटिकस्फुटच्छविं सदैव गोरक्षमजं भजाम्यहम् ॥५॥
निरञ्जनं निगुर्णमव्ययं विभुं विभूतिभूषं भुवनैकभावनम्। समाधिना योगिजनैर्विभावितं नमामि गोरक्षमघक्षयङ्करम् ॥६॥
कृपाकटाक्षेक्षणलब्धसम्पदः समस्तगोरक्षमहीक्षितः क्षितौ। प्रथीयसा यद्यशसा विरेजिरे नमोस्तु गोरक्ष यमक्षयक्षम ॥७॥
उपस्थितौ सृष्टिमुखे सुरैः सममुभौ मणिद्वीपमुपेतसंशयौ। स चन्द्रचूडेन विरञ्चिरच्युतस्त्वयैव गोरक्ष कृतौ विसंशयौ ॥८॥

रक्षाष्टमिदं पुण्यं गोरक्षस्य महेशितुः। सायं प्रातः प्रपठतां जनानां वृजिनापहम् ॥९॥
श्रीसिद्धाचलचूडयाऽचलतया सिद्धाश्रमो धार्यते येनोत्कृष्टमृगस्थली गतवती कैलासलक्ष्मीमियम्।
प्रासादौ प्रजया समं सुरगणैर्मत्स्येन्द्रगोरक्षयोः प्राचीनौ प्रजया नृपैश्च महितौ प्रामाणिकौ साक्षिणौ ॥१॥
शेते व्यायतबाहुरेष पदवीव्याजेन सिद्धाचलो हस्ते न्यस्य सदाचलः पशुपतिं गुह्येश्वरीं विन्ध्यवत्।
वक्षोन्यस्तसमस्तसिद्धपरिषन्मत्स्येन्द्रगोरक्षको रक्षार्थं क्षितिमण्डलस्य लतिकावृक्षावलीलोमशः ॥२॥
सिंहाः शैलगुहां सरोवरमिभा हंसा यथा मानसं चन्द्रं कैरविणीकुलं कुवलयं भृङ्गा घनं चातकाः।
भोगीन्द्रा मलयं धनं गतधनाः पद्माकरा भास्करं स्वातिं शुक्तिकुलं जलं भ्फषकुलं मेघं मयूरा यथा ॥३॥
सारङ्गा मृदुरागमुज्ज्वलशिखं दीपं पतङ्गा यथा व्यापन्नाः शरणं खगाः फलतरुं बाला यथा मातरम्।
कस्तूर्यो हिमशैलवासमबलाः कान्तं चकोरा विधुं गोरक्ष प्रतिवासरं तव पदं ध्यायन्ति योगीश्वराः ॥४॥

युग्मम्

॥ॐ स्वस्ति॥

॥ इति गोरक्षप्रकरणम्॥

# अथ बुद्धप्रकरणम्

१. लोकेशरक्षास्तवः

**(यस शीर्षक अन्तर्गत आर्यावलोकितेश्वरको स्तुति गरिएको छ। यसको रचना सिद्धचर्पटनाथले गरेका हुन्।)**

**ॐ नमः श्रीमदार्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय नमो लाकेनाथाय नमो मत्स्येन्द्रनाथाय।**

देवमनुष्यासुरनतचरणं प्रतिहतजन्मजरारुजमरणम्। लोकेश त्वं मामशरण्यं रक्ष कृपालो कुरु कारुण्यम् ॥१॥
संसारोदधिमध्यनिमग्नं क्लेशमहोर्मिसमाहितभग्नम्। मामवधीरय मा विरुवन्तं त्राहि महाकृप नौमि भवन्तम् ॥२॥
दृष्ट्वा तिमिरोपद्रुतनेत्रं मरणमहाभयविह्वलगात्रम्। पालय भगवन् नवलोकय मां यावदवीचीं यामि न विषमाम् ॥३॥
कृतमन्यस्त्रीग्रहणमजस्रं हतमज्ञेन प्राणिसहस्रम्। नाथ मया कृतपापमशेषं नाशय सम्प्रति कायिकदोषम् ॥४॥
यज्जीवितसत्कारनिमित्तं लोकानित्यं भणितमसत्यम्। तल्लोकेश्वर शमय समस्तं वाचिकनरकं चिरमभ्यस्तम् ॥५॥
सत्त्वानां यच्चिन्तितमहितं स्वयमनुमोदितमपि परविहितम्। तदिदानीं मम मानसपापं स्फोटय नाथ करोमि विलापम् ॥६॥
देवमनुष्यासुरजातीनां तिर्यङ्नरकं प्रेतगतीनाम्। सत्त्वा ये निवसन्ति तदार्ता रक्षसि तानिति तव मयि वार्ता ॥७॥
तेन ममोपरि सृज कारुण्यं वीक्ष्य शरीरं गततारुण्यम्। इति शृणु भगवन् भवति भणामि यावन्नरकं नैव विशामि॥८॥
किञ्चोपेत्य करोषि परार्थं मुञ्चसि भगवन् मामकृतार्थम्। अथवापेक्ष्य कृपा तव पुण्यं जनयसि दुष्टं कथमविपन्नम् ॥९॥
स्मरणेनापि भवसि परितुष्टः क्षपयसि कलुषं किमिति न दृष्टः। तस्माद् भगवन् परहितदक्ष क्षेपं मा कुरु मामिह रक्ष ॥१०॥
दन्तितुरङ्गमपुत्रकलत्रं राज्यमकण्टकवेश्मविचित्रम्। मांसास्थिशिरोऽसृक्पर्यन्तं भवतार्थिभ्यो दत्तमनन्तम् ॥११॥
अञ्जनगुटिकापादुकसिद्धिः सिद्धौषधिमणिमन्त्रविशुद्धिः। सिध्यति यक्षस्त्रीपुरवेशस्तुष्यसि यस्य त्वं लोकेशः ॥१२॥
ये करचरणविलोचनहीना विविधव्याधिमहाभयदीनाः। ते त्वयि तुष्टे पुष्टशरीरा विलसन्त्यरुजो गुणगम्भीराः ॥१३॥
गरलव्याधिग्रहडाकिन्यः शान्तिं यान्ति सदा योगिन्यः। सरति न तस्य पुरो यमदूतः प्रीतो यस्य त्वं जिनभूतः ॥१४॥
इति लोकेश्वर किं प्रियमाणं मुञ्चसि भगवन् मामतिकृपणम्। रौम्यहमनुदिनमुद्यतराणिर्नाशय त्राससमाकुलवाणी ॥१५॥
षड्विषयेन्द्रियचञ्चलमनसा कृतबहुपापं व्याकुलवपुषा। नीतं जन्म मयाऽस्मिन् सकलं जठरनिमित्तं भ्रमताऽविकलम् ॥१६॥
तत्कुरु सम्प्रतिमम लोकेश प्रणतो विहिताञ्जलिरहमेषः। येनाभुक्त्वा कायिकदोषं सुगतिं भवतो यामि न मोषम् ॥१७॥
मोहद्वेषविनाशनहेतुस्त्वं संसारमहोदधिसेतुः। पतितत्रस्तोत्थापनहेतुस्त्वं गुरुदुरितनिशाकरराहुः ॥१८॥
देशितसुगतानुत्तरतत्त्वस्त्वं पालितबहुदुःखितसत्त्वः। निर्जितदुर्जयमन्मथमारस्त्वं सन्तीर्णभवार्णवपारः ॥१९॥
सकलग्लानिनिकृन्तनदेहस्त्वं परमाखिलजगति सुदेहः। भगवन् ननुपमकरुणासिन्धुस्त्वं जनविदितोऽकारणबन्धुः ॥२०॥
लीलाविदलितकर्मविभङ्गस्त्वं परहितविषयव्यासङ्गः। दिव्यध्यानसमाहितचित्तस्त्वं याचकसाधारणवित्तः ॥२१॥
परमकुर्वन्नपि करुणावान् मयि परितोषं न करोति भवान्। कथमिह मोहमहोरगदष्टे विषयसमीहाकुशलं भ्रष्टे ॥२२॥
सकलजनार्थं प्रति या करुणा सा किं भवतो नियतस्फुरणा। येन न रक्षसि कल्विषवन्तं भवतः पुरतो मां विरुवन्तम् ॥२३॥
नाथ कृपा ते व्योमविशाला सत्त्वेषु यथाम्बुदजलधारा। स्थलजलनिम्नोन्नतबहुदेशे सरति निरन्तरमनिशमशेषे ॥२४॥
इति भगवन् स्मरणेन यत्पुण्यं मम तेनेदं जगदक्षुण्णम्। भवाच्छ्रीपोतलकाचलवासं जनयतु सुन्दरविविधविलासम् ॥२५॥
॥ इति श्रीमदार्यावलोकितेश्वरभट्टारकस्य चर्पटिपादविरचितं मत्स्येन्द्रस्तोत्रं समाप्तम्॥

२. करुणामयस्तवः

**(भगवान् बुद्धलाई करुणामूर्ति मानी यहाँ उहाँको अत्यन्त मनोहर हृदयस्पर्शी स्तुति गरिएको छ। यस स्तुतिको रचना बन्धुदत्ताचार्यले गरेका हुन्।)**

नमो लोकनाथाय।

स्तुत्वा प्रणम्यमभयङ्करसर्वसत्त्वाः सम्पूर्णचन्द्रवदनाम्बुजपत्रनेत्रम्।
सर्वज्ञबोधमुटोज्ज्वलमुक्तिमार्गं तं पद्मपाणिवरभूषितबोधराशिम् ॥१॥
उत्तुङ्गनासवरपीनकपोलवक्त्रं रक्ताधरं हिमतुषारमिवासुदन्तम्।
ब्रह्मस्वरं श्रुतिसुधामधुरं च वाक्यं त पद्मपाणिमृदुवर्णगिरं नमामि ॥२॥
मालाधरं कनकरत्नविभूषिताङ्गं नेत्रत्रयं जटविभूषितबालचन्द्रम्।
कृष्णाजिनाम्बरधरं च सुवर्णवर्णं तं पद्मपाणिमृदुगात्रधरं नमामि ॥३॥
त्वं लोकनाथमवलोकितनामधेयं यज्ञोपवीतसदचञ्वलसर्पराजम्।
चिन्तामणिप्रवरकुण्डलघृष्टगण्डं तं पद्मपाणिनुतिसर्वकृतं नमामि ॥४॥
सद्ज्ञानराशिवरभाषितसर्वसत्त्वः संसारपङ्कतिमिरार्णवमग्नसत्त्वः।
आलोकितं पदमनुत्तरबोधिमार्गं तं पद्मपाणिवरमार्गददं नमामि ॥५॥
गत्वा च येन नरकेषु अवीचिमग्नं शीतीकृतं हृदि विशालरुहं सुपद्मम्।
ये नारकिसकलदुःखविनाशयन्ति तं पद्मपाणिहरकान्तिविभं नमामि ॥६॥
सन्त्रासयन्ति यमपालकभग्नभूमिं हे धर्मराजमिव आगतकामरूपी।
ये कर्मभूमिमिव नाशयते निमित्तं तं पद्मपाणिहतशासनकं नमामि ॥७॥
गत्वा च येन वररूपमनोहराय त्रैलोक्यनाथमभयङ्करसर्वसत्त्वम्।
दुःखार्णवे तव भजामि विमुक्तिदुःखं तं पद्मपाणिहतकिल्विषकं नमामि ॥८॥
त्वं प्रेतलोकगतये करुणावशेन सूचीमुखं ह्युदरपर्वतजीर्णमग्नम्।
क्षुत्तृष्णदुःखभयपीडितप्रेतसत्त्वं तं पद्मपाणितृषनाशकरं नमामि ॥९॥
अन्योन्यभक्षक्षुधपीडितप्रेतसत्त्वा संपीयते कररुहे श्रवणैर्नदीभिः।
पुष्टिं शरीरहतभुक्षतृषातुराणां तं पद्मपाणिहतभुक्षतृषं नमामि ॥१०॥
गत्वा तमो भुवनार्पितचन्द्रसूर्ये चिन्तामणिं ज्वलितरत्नप्रभावभासे।
ते यक्षराक्षसगणैश्चरणे नमस्ते तं पद्मपाणितलभग्नकृतं नमामि ॥११॥
गत्वा च येन बलिभग्नमनोरथस्य यद्दीयते फलमनुत्तरपिण्डपात्रम्।
धर्मंकथेन परितर्पितदानवेन्द्रं तं पद्मपाणिवरधर्मप्रदं नमामि ॥१२॥
गत्वा च येन दिवि कुण्डलदेवपुत्रं दानस्य हीनक्षुदपीडितदुःखितं च।
तं याचयामि परिपूर्णसमृद्धिरत्नं तं पद्मपाणिधनवृद्धिकरं नमामि ॥१३॥
त्वं कामरूपमुपदर्शितराक्षसीभिः कामावशेन चरितं तव राक्षसीभिः।
घातस्य चित्तपरिवर्जितधर्मचित्तं तं पद्मपाणिबहुरूपधरं नमामि ॥१४॥
विण्मूत्रभूमिकृमिकोटिसमुद्भवन्ति गत्वा च येन अलिरूपमनुस्मरन्ति।
निस्सारितं घुणघुणाय ददन्ति धर्मं तं पद्मपाणि अलिरूपधरं नमामि ॥१५॥
दुर्भिक्षमागधविशालभवेषु पुष्टिं क्षुत्तृष्णदुःखभयपीडितसर्वसत्त्वाः।
धान्यादि वृष्टिबहुब्रीहिसमृद्धिरत्नं तं पद्मपाणिवरकारुणिकं नमामि ॥१६॥
बाराहवानिकृतरूपमहाजवेन उद्धृत्य येन वणिजो भयराक्षसीभिः।
आस्तीर्णतं पवनवेगमहासमुद्रं तं पद्मपाणिजितमृत्युभयं नमामि ॥१७॥
त्रैधातुकं तव भजामि विमुक्तिदुःखं नाना समाधिपरिपूर्णविचित्रमग्नम्।
त्वद्रोमकूपनिवसन्ति अनेकसत्त्वाः तं पद्मपाणिक्षयनाशकरं नमामि ॥१८॥
नानाभयानि तव नाममनुस्मरन्ति राजस्य दण्डभयराक्षसचौरभूतैः।
नद्यापि मार्गहतकन्दरचाग्निदग्धं तं पद्मपाणिमभयं ददतं नमामि ॥१९॥
व्याघ्रीभयं खगपिशाचसडाकिनीनां आपत्सु व्याधिबहुकुष्ठवियोगदुःखम्।

वैराग्यक्लेबहु आपदनाशकरं नमामि ॥२०॥
शुक्लाष्टमीनियमधर्म अमोघपाशं तस्मै कृतं विजितमिन्द्रियब्रह्मचर्यम् ।
सर्वप्रणम्य निजगेय अशेषपापं तं पद्मपाणिवरदाय सदा नमामि ॥२१॥
नित्यं वसे गुणसमृद्धितपोतलेषु नानाद्रुमं तिलकचम्पकपारिजातैः ।
रम्यं तडागद्विजश्वापदसेवितानि तं पद्मपाणिनिलयेषु सदा नमामि ॥२२॥
देवैः कुबेरवरुणैर्यमवन्दितश्च गन्धर्वयक्षमुनिदानववन्दितश्च ।
रक्षेषु नागमनुजैश्च नमस्कृतेषु भूतैः पिशाचगरुडैश्च नमस्कृतेषु ॥२३॥
ये ते पठन्ति करुणास्तवनित्यकालं शान्तिं च पुष्टिधनवृद्धिषु लब्धकामाः ।
आयुर्विभूतिवरसौख्यविशालभागी त्रैकालप्राप्तमपि पश्यति लोकनाथम् ॥२४॥
संकीर्तयन्ति तव वीर्यमहानुभावं रात्रौ दिवा च तव नाम मनुस्मरन्ति ।
दुःस्वप्तविघ्नभयपापविनाशयन्ति तुष्यन्तु देव सततं तव रक्षयन्ति ॥२५॥

॥ इति श्रीमदार्यावलोकितेश्वरभट्टारकस्य बन्धुदत्ताचार्यकृतः करुणास्तवः समाप्तः ॥

### ३. बुद्धधर्मसङ्घस्तवः

**(बुद्धं शरणं गच्छामि, धम्मम् शरणं गच्छामि, संघं शरणं गच्छामि यी बौद्धहरूका महामन्त्र हुन्। यिनै महामन्त्रहरूको तात्पर्यलाई यस बुद्धधर्मसंघस्तवमा प्रकाशित गरिएको छ।)**

नमो बुद्धाय आर्यलोकेश्वराय ।

बुद्धबुद्ध सुगतमुनिनमो धर्मत्रयोदशभुवननाथः । सत्वसंसारउद्धारणदात बुद्ध धर्म संघ देव नमस्ते ॥१॥
बुद्धवैरोचनविश्वव्यापितमहावैरोचनदेव नमस्ते । ज्योतिर्मयं चैतन्यस्वयम्भुमुनीन्द्र बुद्ध धर्म संघ देव नमस्ते ॥२॥
अमिताभमयूरासनमुनिध्यानदृष्टिमुनिअमिताभ नमः । पद्मपाणिअभयवरदाता बुद्ध धर्म संघ देव नमस्ते ॥३॥
विपश्विशिखिविश्वभुवमुनिक्रतुच्छन्दकनकमुनि नमः । काश्यपश्रीशाक्यसिंहमुनीन्द्र बुद्ध धर्म संघ देव नमस्ते ॥४॥
मञ्जुश्रीज्ञानसत्वउद्धारणमैत्री बोधिसत्वदेवनमस्ते । चन्द्रमण्डलसूर्यसुतेज बुद्ध धर्म संघ देव नमस्ते ॥५॥
ब्रह्माविष्णुरुद्रमहेश्वरदेव इन्द्रयममुनिपूजितपादौ । नागासुरनरबुद्धशरण बुद्ध धर्म संघ देव नमस्ते ॥६॥
गन्धर्वगरुडमुनिचरणरागद्वेषमोहनाशनामोक्षः । दारिद्र्यदुःखविनाशनरक्ष बुद्ध धर्म संघ देव नमस्ते ॥७॥

॥ इति श्रीमदार्यावलोकितेश्वरभट्टारकस्य बिलिधनकृतं बुद्धधर्मसङ्गस्तोत्रं समाप्तम् ॥

### ४. मङ्गलाष्टकम्

**(प्रातःकालमा बौद्धहरूले पाठ गर्नुपर्ने आठ श्लोक भएको मङ्गलाष्टक प्रस्तुत गरिएको छ।)**

ॐ नमः श्री मञ्जुनाथाय ।

मञ्जुश्रीलोकनाथोजिनवरमुकुटो जम्भरोवज्रसत्वो मैत्रेयोवज्रपाणिः सुखवलयकरो राहुलो भद्रपालः ।
बुद्धो वैरोचनादिस्त्रिभुवननमितः क्षीणनिःशेषदोषः तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥१॥
दृष्ट्वा हुँकारवज्रपशुपतिदमको वज्रघण्टाक्षकहस्तः पीतो हालाहलं यो रिपुगणमथनस्तर्किराजोमहात्मा ।
अक्षोभ्यो रत्नकेतुः प्रतिदिनमचलो गन्धहस्तीर्यमानी तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥२॥
सङ्घं त्रैलोक्यबन्धुर्गुणगणनिलयो बोधिचिन्तः सुचिन्तो बुद्धः प्रावृन्दसिद्धो विजितकलिमलो हेरुको नीलदण्डः ।
बुद्धः सालेन्द्रराजो विजितजिनगुणः सर्वसत्त्वा तु कम्पा तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वोदिशन्तु ॥३॥
प्रज्ञा चूडा च तारा तदनु च भृकुटी ज्ञानसम्भारभारा मारीचिमारमारा सकलभयहरी पीतवक्त्रा त्रिवक्त्रा ।
मायूरीमामकी च क्षपितरिपुगणा पाण्डुरालोचनाद्या तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥४॥
गान्धारीजाङ्गुली च भुजगहितकरा खड्गपाशाङ्कुशाग्रा वाराही वज्रहस्ता असिपरशुधरा धर्मधातेश्वरी च ।
केयूरी ज्ञानकेतुर्ध्वजनिहितकरा खड्गपाशावली च तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥५॥
वीणामालासुगीता प्रथितजिनवरे सारथी धूपवज्रा वेतारीगन्धवज्रा प्रहसितवदना सौगती सार्यतारा ।
रश्मिर्बुद्धस्य बोधौ सकलजिनहिता सारथीदीपवज्रा तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥६॥
वैशाल्या धर्मचक्रे प्रथितजिनवरे पर्वते गृध्रकूटे श्रावत्यालुम्बिनीये क्षितिवरनिहिते कोङ्कणे बोधिवृक्षे ।

श्रीमद्देवावतारा सुरनरनमितं श्रीफलं शङ्खचक्रम् तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥७॥
छत्रं दूर्वा च पत्रं ध्वजमपि निहितं रोचनामत्स्ययुग्मं वाराही पूर्णकुम्भं मुनिवरवचनं वज्रघण्टानिनादम्।
बुद्धानां प्रातिहार्यं सुरनरनमितं हास्यलास्यैर्विलास्यैः तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥८॥
श्रीवत्सं पुण्डरीकं ध्वजवरकलशं चामरं मत्स्ययुग्मं तत् छत्रं हेमदण्डं रविशशि उभयो दक्षिणावर्तसङ्खम्।
गोकन्याशंखभेरी दधिफलकुसुमं पावको दीपमाला तुष्टाः सर्वार्थसिद्धिर्विमलसुमनसो मङ्गलं वो दिशन्तु ॥९॥

॥ इति मङ्गलाष्टकं समाप्तम् ॥

## ५. वागीश्वरस्तवः

**(पञ्चबुद्ध भट्टारकद्वारा रचित वागीश्वरस्तवमा भगवान् बुद्धलाई वाणीका ईश्वर मानी वागीश्वर स्वरूपमा स्तवन गरिएको छ।)**

**नमो बुद्धाय।**

मध्ये वैरोचनो बुद्धो मध्ये समन्तभद्रकः। मध्ये सिंहासनं पद्मं श्वेतवर्ण नमोऽस्तु ते ॥१॥
पूर्व अक्षोभ्य सम्भव वज्रपाणि महालयः। गजवाहन सम्पूर्णो नीलवर्ण नमोऽस्तु ते ॥२॥
दक्षिणरत्नसम्भवो रत्नपाणिर्महातेजाः। तुरङ्गवाहनसम्पूर्णः पीतवर्ण नमोऽस्तु ते ॥३॥
पश्चिम अमिताभव पद्मपाणि कृपावन्तम्। मयूरवाहनसम्पूर्ण रक्तवर्ण नमोऽस्तु ते ॥४॥
उत्तरअमोघसम्भव विश्वपाणि विद्याधर। गरुडवाहनसम्पूर्ण श्यामवर्ण नमोऽस्तु ते ॥५॥
लोचना मामकी तारा पाण्डुराय नमोऽस्तु ते। वज्रसत्वसमाध्यान धर्मधातुं नमोऽस्तु ते ॥६॥
॥ इति श्रीपञ्चबुद्धभट्टारकस्य वागीश्वरस्य स्तवस्तोत्रं समाप्तम् ॥

## ६. आदिबुद्धद्वादशकम्

(धर्मरूप, बुद्धरूप, संघरूप, पृथ्वीरूप, तेजोरूप आदि अनेकौं रूपमा रहेका भगवान् बुद्धको यहाँ स्तवन गरिएको छ। यस स्तोत्रलाई स्वयम्भू पुराणबाट उद्धृत गरिएको हो।)

ॐ नमः श्रीविश्वरूपाय।

नमस्ते बुद्धरूपाय धर्मरूपाय ते नमः। नमस्ते संघरूपाय पञ्चभूपात्मने नमः ॥१॥
पृथ्वीरूपायाब्रूपाय तेजोरूपाय ते नमः। नमस्ते वायुरूपायाकाशरूपाय ते नमः ॥२॥
ब्रह्मणे सत्वरूपाय रजोरूपाय विष्णवे। तमोरूपमहेशाय ज्ञानरूपाय ते नमः ॥३॥
प्रज्ञोपायात्मरूपाय गुह्यरूपाय ते नमः। दिग्रूपलोकपालाय विश्वरूपाय ते नमः ॥४॥
चक्षुरूपाय कार्णाय घ्राणरूपाय जैह्विकाकायरूपाय श्रीधर्मरूपाय मनसे नमः ॥५॥
नमस्ते रूपरूपाय शब्दरूपाय ते नमः। गन्धरूपाय रासाय स्पर्शरूपाय ते नमः ॥६॥
धारकाय धर्मरूप षडिन्द्रियात्मने नमः। मांसास्थि मेदमज्जान्तः संघातरूपिणे नमः ॥७॥
रूपाय जङ्गमानाञ्च स्थावराणाञ्च मूर्तये। तिरश्चां मोहरूपाय रूपायाश्चर्यमूर्तये ॥८॥
सृष्टिकर्त्रे जन्मरूप कालरूपाय मृत्यवे। भव्याय वृद्धरूपाय बालायते नमो नमः ॥९॥
प्राणापानसमानोदानव्यानमूर्तये नमः। वर्णाय वर्णरूपाय भोक्त्रेऽन्नमूर्तये नमः ॥१०॥
दिनरूपाय सूर्याय चन्द्राय रात्रिमूर्तये। तिथिरूपाय नक्षत्रयोगवारादिमूर्तये ॥११॥
बाह्याभ्यन्तररूपाय लौकिकाय नमो नमः। नैर्वाणाय नमस्तुभ्यं बहुरूपाय ते नमः ॥१२॥
आदिबुद्धद्वादशकं पुण्यं प्रातः पठिष्यति। यदिच्छति लभेन्नूनमनूनो नित्यनिश्चयम् ॥१३॥
और्जिकायां पौर्णमास्यामादिबुद्धस्य दर्शनम्। प्राप्तं मञ्जुकुमारेण ससुरासुरदुर्लभम् ॥१४॥
इतिश्रीस्वायम्भूपुराणोद्धृतमादिबुद्धद्वादशकं समाप्तम्।

॥ इति बुद्धप्रकरणम् ॥